श्रीहरिः

# पञ्चाङ्गसङ्ग्रहः

तत्र

महाकालीपञ्चाङ्गं महालक्ष्मीपञ्चाङ्गं महासरस्वतीपञ्चाङ्गं च



वाराणसीस्थराजकीयसंस्कृतपाठशालीय-

न्यायाध्यापकेन तर्कतीर्थोपाधिधारिणा

श्रीसुरेन्द्रलालगोस्वामिना

संस्कृतम्।

बाबूगणेशदास और कम्पनी

इतिनाम्ना प्रसिद्धस्य धनव्ययेन

वाराणस्यां

यज्ञेश्वरयन्त्रालये

१९५४ वर्षे

मुद्रितम्।

मूल्यमेकमुद्रापरिमितम्।

# विज्ञप्तिः ।

महाकालीपञ्चाङ्गं महालक्ष्मीपञ्चाङ्गं महासरस्वतीपञ्चाङ्गं चेति पञ्चाङ्गत्रयस्य मुद्रणद्वारा प्रकाशनार्थं वाराणस्यां स्थितेन बाबूगणेशदासेनाभ्यर्थितोऽहमेकादर्शपुस्तकावलम्बेन तत्प्रकाशने प्रवृत्तः। किन्तु निरुक्तग्रन्थस्यार्षत्वाद्भक्तिभावप्रधानत्वाच्च यथादर्शमेव शोधनं विधाय मुद्रितवान् न तु किञ्चिदपि स्वबुद्ध्या पाठादिपरिवर्तनं कृतवान्। अपि च महाकालीनामसहस्रस्य आदर्शपुस्तकत्रयं तथा कर्पूरस्तवस्य सरस्वतीस्तोत्रस्यापि पुस्तकद्वयं लब्धवानिति तत्र तत्र पाठान्तराणि दर्शितवान्। अत्र भक्तानामल्पेऽपि समादरे निजपरिश्रमं सकलं सफलं मन्ये इति निवेदयति ॥

श्रीसुरेन्द्रलालशर्म्मा ।

# पञ्चाङ्गसङ्ग्रहस्य सूचीपत्रम् ।



| विषयः | | पृष्ठाङ्काः | पङ्क्त्यङ्काः |
|---|---|---|---|
| महाकालीपटलः | ... | १ | ३ |
| महाकालीपूजापद्धतिः | ... | ५ | २ |
| जगन्मङ्गलं नाम श्यामाकवचम् | ... | ११ | २ |
| महाकालीकवचान्तरम् | ... | १४ | २ |
| महाकालीसहस्रनामस्तोत्रम् | ... | २१ | १२ |
| महाकालीकर्पूराख्यस्तोत्रम् | ... | ४४ | ९ |
| महालक्ष्मीपटलः | ... | ५५ | ३ |
| महालक्ष्मीपूजापद्धतिः | ... | ५६ | ९ |
| महालक्ष्मीकवचम् | ... | ६८ | ७ |
| महालक्ष्मीस्तोत्रम् | ... | ७१ | १० |
| महालक्ष्मीसहस्रनामस्तोत्रम् | ... | ७१ | १८ |
| महासरस्वतीपटलः | ... | ८९ | ३ |
| महासरस्वतीपूजापद्धतिः | ... | ९४ | १५ |
| महासरस्वतीत्रैलोक्यमोहनाख्यकवचम् | ... | ११० | १० |
| महासरस्वतीकवचान्तरम् | ... | ११३ | १७ |
| महासरस्वतीसहस्रनामस्तोत्रम् | ... | ११६ | ९ |
| महासरस्वतीस्तोत्रम् | ... | १२८ | १० |

# पञ्चाङ्गसङ्ग्रहस्य शुद्धिपत्रम् ।

| पृष्ठाङ्काः | पङ्क्त्यङ्काः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | ७ | मोहानाद्यां | मोहनाद्यां |
| ३ | ८ | युधानपि | युधान्यपि |
| ५ | २० | घोरांमु क्तकेशीं | घोरां मुक्तकेशीं |
| ६ | २१ | नेत्राय | नेत्रत्रयाय |
| ७ | ८ | स्वदनु | सदल |
| ९ | ५ | क्रों | क्रीं |
| १७ | ४ | षष्ठि | षष्टि |
| २२ | ७ | पराम | पराम् |
| ४५ | ९ | आनिमाद्यष्ठ | अणिमाद्यष्ट |
| ४६ | ३ | छिन्न | च्छिन्न |
| ४८ | १६ | मित्यर्थ | मित्यर्थः |
| ४९ | २२ | त्वा | त्वां |
| ६० | ८ | ते भूता ये भूता | ते भूता |
| ६० | १३ | जल | जले |
| ६४ | ११ | सिन्यु | सिन्धु |
| ६९ | १७ | श्वक्षुस्था | श्चक्षुःस्था |
| १०५ | १५ | काङ्गष्ठ | काङ्गुष्ठ |
| ११० | ४ | वागस्या | वागीश्या |
| ११० | ८ | सम्पूर्णाः | सम्पूर्णा |
| ११० | १३ | निश्चतम् | निश्चितम् |
| ११३ | २ | राज्यकोपः | राजकोपः |
| ११८ | १८ | कुटे | कूटे |

ओं श्रीगणेशाय नमः ।

# अथ कालीपञ्चाङ्गम् ।



अथ कालीमनून्वक्ष्ये सद्यो वाक्सिद्धिदायकान् । आराधितैर्यैः सर्वेष्टं प्राप्नुवन्ति जना भुवि ॥ १ ॥ ब्रह्मरेफौ वामनेत्रचन्द्रारूढौ मनुर्मतः । एकाक्षरो महाकाल्याः सर्वसिद्धिप्रदायकः ॥ २ ॥ बीजं दीर्घयुतश्चक्री पिनाकी नेत्रसंयुतः । क्रोधीशो भगवान् स्वाहा खण्डार्णो मन्त्र ईरितः ॥ ३ ॥ काली कूर्चं तथा लज्जा त्रिवर्णो मनुरीरितः । हुंफट्ततश्च पञ्चार्णः स्वाहान्तः सप्तवर्णकः ॥ ४ ॥ कूर्चद्वयं त्रयं काल्या मायायुग्मं च दक्षिणे । कालिके पूर्वबीजानि स्वाहामन्त्रो वशीकृतः ॥ ५ ॥ मन्त्रराजः पुनः प्रोक्तः बीजसप्तकमुत्सृजेत् । तिथिवर्णो महामन्त्र उपास्तिः पूर्ववन्मता ॥ ६ ॥ न चात्र सिद्धिसाध्यादिशोधनं मनसापि वा । न यत्नातिशयः कश्चित्पुरश्चर्यानिमित्तकः ॥ ७ ॥ विद्याराज्ञीस्मृतेरेव सिद्धाष्टकमवाप्नुयात् । भैरवोऽस्य ऋषिश्छन्द उष्णिक्काली तु देवता ॥ ८ ॥ बीजं माया दीर्घवर्मशक्तिरुक्ता मनी-

षिभिः । षड्दीर्घाढ्यादग्बीजेन त्रिदशाया अङ्गमी-
रितम् ॥ ९ ॥ मातृकान् पञ्चधा भक्त्वा वर्णान्
दशादशक्रमात् । हृदये भुजयोः पादद्वये मन्त्री प्रवि-
न्यसेत् ॥ १० ॥ व्यापकं मनुना कृत्वा ध्यायेच्चेतसि
कालिकाम् ॥ सद्यश्छिन्नशिरः कृपाणमभयं हस्तै-
र्वरं बिभ्रतीं घोरास्यां शिरसा स्रजा सुरुचिरामुन्मत्त-
केशावलीम् । सृक्कासृक्प्रवहां श्मशाननिलयां श्रु-
त्योः शवालङ्कृतीं श्यामाङ्गीं कृतमेखलां शवकरैर्देवीं
भजेत् कालिकाम् ॥ ११ ॥ एवं ध्यात्वा जपेल्लक्षं
जुहुयात्तद्दशांशतः । प्रसूनैः करवीरोत्थैः पूजायन्त्रम-
थोच्यते ॥ १२ ॥ आदौ षट्कोणमारच्य त्रिकोणत्रि-
तयं ततः । पद्ममष्टदलं बाह्ये भूपुरं तत्र पूजयेत् ॥
१३ ॥ जयाख्या विजया पश्चादजिता चापराजिता ।
नित्या विलासिनी चापि दोग्ध्री घोरा च मङ्गला ॥
१४ ॥ पीठशक्तय एताः स्युः कालिकायोगपीठतः ।
आत्मनो हृदयान्तोऽयं मयादिपीठमन्त्रकः ॥ १५ ॥
अस्मिन्पीठे यजेद्देवीं शवरूपशिवस्थिताम् । महाका-
लरतासक्तां शिवाभिर्दिक्षु वेष्टिताम् ॥ १६ ॥ अङ्गा-
नि पूर्वमाराध्य षट्पत्रेषु समर्चयेत् । कालीं कपा-
लिनीं कुल्वां कुरुकुल्वां विरोधिनीम् ॥ १७ ॥ विप्र-
चित्तां तु सम्पूज्य नवकोणेषु पूजयेत् । उग्रामुग्रप्रभां

दीप्तां नीलां घनां बलाकिकाम् ॥ १८ ॥ मात्रां मुद्रां
तथामित्रां पूज्याः पत्रेषु मातरः । पद्मस्याष्टसु नेत्रेषु
ब्राह्मी नारायणी तथा ॥ १९ ॥ माहेश्वरी च चामु-
ण्डा कौमारी चापराजिता । वाराही नारसिंही च
पुनरेताश्च भूपुरे ॥ २० ॥ भैरवीं महदादान्तां सिं-
हादयां धूम्रपूर्विकाम् । भीमोन्मत्तादिकां चापि व-
शीकरणभैरवीम् ॥ २१ ॥ मोहानादयां समाराध्य
शक्रादीनायुधानपि । एवमाराधिता काली सिद्धा
भवति मन्त्रिणाम् ॥ २२ ॥ ततः प्रयोगान् कुर्वीत
महाभैरवभाषितान् । आत्मनोऽर्थं परस्यार्थं क्षिप्र-
सिद्धिप्रदायकान् ॥ २३ ॥ स्त्रीणां प्रहारं निन्दां च
कौटिल्यं चाप्रियं वचः । आत्मनो हितमन्विच्छन्
कालीभक्तो विवर्जयेत् ॥ २४ ॥ सुदृशो मदनावासं-
तस्या यः प्रजपेन्मनुम् । अयुतं सोऽचिरादेव वाक्-
पतेः समतामियात् ॥ २५ ॥ दिगम्बरो मुक्तकेशः
श्मशानस्थो जितेन्द्रियः । जपेदयुतमेतस्य भवेयुः
सर्वकामनाः ॥ २६ ॥ शवहृदयमारुह्य निर्वासाः प्रे-
तभूगतः । अर्कपुष्पसहस्त्रेणाभ्यक्तेन स्वीयरेतसा ॥
२७ ॥ देवीं यः पूजयेद्भक्त्या जपन्नेकैकशो मनुम् ।
सो ऽचिरेणैव कालेन धरणीप्रभुतां व्रजेत् ॥ २८ ॥
रजःकीर्णं भगं नार्या ध्यायन् योऽयुतमाजपेत् । स

कवित्वेन रम्येण जनान् मोहयति ध्रुवम् ॥ २९ ॥ त्रिपञ्चारे महापीठे शवस्य हृदि संस्थिताम् । महाकालेन देवेन मारयुद्धं प्रकुर्वतीम् ॥ ३० ॥ तां ध्यायन् स्मेरवदनां विदधत्सुरतं स्वयम् । जपेत्सहस्रमपि यः स शङ्करसमो भवेत् ॥ ३१ ॥ आस्थिलोमत्वचा युक्तं मांसं मार्जारमेषयोः । उष्ट्रस्य महिषस्यापि बलिं यस्तु समर्पयेत् ॥ ३२ ॥ भूताष्टभ्यो मध्यरात्रे वश्याः स्युः सर्वजन्तवः । विद्यालक्ष्मीयशःपुत्रैः सुचिरं सुखमेधते ॥ ३३ ॥ यो हविष्याशनरतो दिवा देवीं स्मरन् जपेत् । नक्तं निधुवनासक्तो लक्षं स स्याद्धरापतिः ॥ ३४ ॥ रक्ताम्भोजैर्भवेन्मैत्री धनैर्जयति वित्तपम् । बिल्वपत्रैर्भवेद्राज्यं रक्तपुष्पैर्वशीकृतिः ॥ ३५ ॥ असृजा महिषादीनां कालिकां यस्तु तर्पयेत् । तस्य स्युरचिरादेव करस्थाः सर्वसिद्धयः ॥ ३६ ॥ यो लक्षं प्रजपेन्मन्त्रं शवमारुह्य मन्त्रवित् । तस्य सिद्धो मनुः सद्यः सर्वेप्सितफलप्रदः ॥ ३७ ॥ तेनाश्वमेधप्रमुखैर्यागैरिष्टा सुजन्मना । दत्तं दानं तपस्तप्तं पूजयेत् यस्तु कालिकाम् ॥३८॥ ब्रह्मा विष्णुः शिवो गौरी लक्ष्मीर्गणपतीरविः । पूजिताः सकला देवा यः कालीं पूजयेत्सदा ॥३९॥

इतिश्रीदक्षिणकालिकापटलाख्यं मन्त्राद्युद्धारकमङ्गं सम्पूर्णम् ॥

अथ सङ्क्षेपतः श्रीकालिकापूजापद्धतिः ।

प्रातरुत्थाय श्रीगुरुं प्रणम्यावश्यकं कृत्वा नद्यादौ स्नात्वा आसनमुपविश्य ॥ ह्रीं आधारशक्तिकमलासनाय नमः इत्यासनं सम्पूज्य वामे ऐं गुरुभ्यो नमः दक्षिणे गं गणपतये नमः अग्रे श्रीपरदेवतायै नमः । मूलेन प्राणायामत्रयं कृत्वा शिरसि भैरवाय ऋषये नमः मुखे त्रिष्टुप्छन्दसे नमः हृदये श्रीदक्षिणकालिकादेवतायै नमः गुह्ये हूंबीजाय नमः पादयोः ह्रींशक्तये नमः नाभौ क्रींकीलकाय नमः ॥ इति विन्यस्य ममेष्टसिद्धये विनियोगः इति कृताञ्जलिरुक्त्वा ॥ क्रां हृदयाय नमः । क्रीं शिरसे स्वाहा । क्रूं शिखायै वषट् । क्रैं कवचाय हुं । क्रौं नेत्रत्रयाय वौषट् । क्रः अस्त्रायफट् ॥ इति षडङ्गन्यासं कृत्वा ॥ हृदि अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं नमः । दक्षभुजे एं ऐं ओं औं अं अः कं खं गं घं नमः । वामे ङं चं छं जं झं ञं टं ठं डं ढं नमः । दक्षजङ्घायां णं तं थं दं धं नं पं फं बं भं नमः । वामायां मं यं रं लं वं शं षं सं हं ळं क्षं नमः ॥ इति विन्यस्य मूलेन पञ्चधा पुनः सप्तधा व्यापकं न्यसेत् ॥ ततः । करालवदनां घोरां मुक्तकेशीं चतु-

भुजाम्। कालिकां दक्षिणां दिव्यां मुण्डमालावि-
भूषिताम्॥ सद्यश्छिन्नशिरःखड्गवामोर्ध्वाधःकरा-
म्बुजाम्। अभयं वरदं चैव दक्षिणाधोर्ध्वपाणिकाम्॥
महामेघप्रभां श्यामां तथा चैव दिगम्बरीम्। क-
ण्ठावसक्तमुण्डालीगलद्रुधिरचर्चिताम्॥ कर्णावतं-
सतानीतशवयुग्मविराजिताम्। घोरदंष्ट्रां कराला-
स्यां पीनोन्नतपयोधराम्॥ शवानां करसङ्घातैः कृत
काञ्चीं हसन्मुखीम्। सृक्कद्वयगलद्रक्तधाराविस्फुरि-
ताननाम्॥ घोररूपां महारौद्रीं श्मशानालयवासि-
नीम्। दन्तुरां दक्षिणव्यापिमुक्तालम्बिकचोच्च-
याम्॥ शवरूपमहादेवहृदयोपरिसंस्थिताम्। शि-
वाभिर्घोररूपाभिश्चतुर्दिक्षु समन्विताम्॥ सुखप्र-
सन्नवदनां स्मेराननसरोरुहाम्। एवं सञ्चिन्तयेत्
कालीं श्मशानालयवासिनीम्॥ इति ध्यात्वा
मानसपूजान्ते मूलेन यन्त्रोपरि पुष्पाञ्जलिं दत्त्वा
स्ववामाग्रे चतुरस्रकं त्रिकोणात्मकं मण्डलं चन्द-
नेन विरच्य श्रीकालिकायाः सामान्यार्घाधारमण्ड-
लाय नमः इति मण्डलं सम्पूज्य तत्र वायव्य-
नैर्ऋत्यैशानाग्नेयकोणेषु क्रां हृदयाय नमः क्रीं
शिरसे नमः क्रूं शिखायै नमः क्रैं कवचाय नमः
इति सम्पूज्य पुरतः क्रौं नेत्राय नमः। स्वाग्रा-

दिक्चतुर्दिक्षु क्रः अस्त्राय नमः इतिसम्पूज्य तत्र मूलक्षालितमाधारं संस्थाप्य धूम्रार्च्चिरादिदशकलाभ्यो नमः इति सम्पूज्य तत्र स्वक्षालितं पात्रं संस्थाप्य तापिन्यादिद्वादशकलाभ्यो नमः इति सम्पूज्य तत्र जलं मूलेन निक्षिप्य अमृतादिषोडशकलाभ्यो नमः इति सम्पूज्य सुगन्धं पुष्पं निक्षिप्य मूलेनाष्टवारमभिमन्त्र्य धेनुयोनिमुद्रे प्रदर्शयेत् ॥ इतिसामान्यार्घं संस्थाप्य तत्र स्ववनुपद्माकारेण त्रिकोणत्रयं कृत्वा ॥ तत्र पात्रद्वयं साधारं सजलं संस्थाप्य पात्रमेकं दधिपूर्णं संस्थाप्य सामान्यार्घ्यजलं किञ्चित्तेषु निक्षिप्य मूलेनाष्टवारमभिमन्त्रयेत् ॥ इति पात्रस्थापनं कृत्वा ॥ स्वदेहं चन्दनादिभिरलङ्कृत्य देवतारूपं ध्यात्वा मूलमन्त्रेण स्वदेहे पञ्चपुष्पाञ्जलीन् दत्वा पीठपूजां कुर्यात् ॥ सामान्यार्घोदकेन चक्रं त्रिः प्रोक्ष्य ओं जयायै नमः । ओं विजयायै नमः । ओं अजितायै नमः । ओंअपराजितायै नमः । ओं नित्यायै नमः । ओं विलासिन्यै नमः । ओं दोग्ध्रै नमः । ओं अघोरायै नमः । ओं मङ्गलायै नमः । इति सम्पूज्य ह्रीं सर्वशक्तिकमलासनाय नमः ॥ इतिसमस्तं पीठं सम्पूज्य मूलं श्रीदक्षिणकालिकामूर्त्तिं कल्पयामि नमः ॥ इति मूर्त्तिं परिकल्प्य

मूलं श्रीदक्षिणकालिकामूर्त्तये नमः ॥ इतिपुष्पादिना सम्पूज्य मूलेन प्राणायामत्रयं ऋष्यादिकषडङ्गन्यासं विधाय कराभ्यां पुष्पाञ्जलिमादाय पद्ममुद्रां बद्ध्वा देवीं तेजोरूपां ध्यात्वा मूलं श्रीदक्षिणकालिके इहागच्छागच्छेति मूर्त्तिशिरसि पुष्पाञ्जलिप्रक्षेपेण तत्तेज आवाह्य मूलं श्रीदक्षिणकालिके इह तिष्ठ तिष्ठेति तस्यां योनिमुद्रां प्रदर्श्य ॥ देवेशि भक्तिसुलभे सर्वावरणसंयुते । यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भवेतिसामान्यार्घोदकेन चक्रं त्रिः प्रोक्ष्य ओं आं ह्रीं क्रों यं रं लं वं शं षं हों हंसः सोहं श्रीदक्षिणकालिकायाः प्राणाः इहप्राणाः ओमित्यादि—श्रीदक्षिणकालिकाया जीव इह स्थितः ॥ ओमित्यादि-श्रीदक्षिणकालिकायाः सर्वेन्द्रियाणि ॥ ओमित्यादि-श्रीदक्षिणकालिकायाः वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणापाना इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ इतिप्राणप्रतिष्ठां कृत्वा श्रीदक्षिणकालिके एतत्ते आसनम् ॥ इतिवामभागे पुष्पं निक्षिप्य ॥ मूलं श्रीदक्षिणकालिके एष ते अर्घः स्वाहा ॥ इत्युदकपात्रेण दत्त्वा मूलं श्रीदक्षिणकालिके एतत्ते पाद्यं नमः ॥ मूलं श्रीदक्षिणकालिके एतत्ते आचमनीयं स्वधा ॥ मूलं श्रीदक्षिणकालिके एष ते म-

धुपर्कः स्वधा ॥ मूलं श्रीदक्षिणकालिके एतत्ते स्ना-
नीयम् ॥ मूलं श्रीदक्षिणकालिके एतत्ते पुनराचम-
नीयम् ॥ मूलं श्रीदक्षिणकालिके एष ते गन्धः ॥
मूलं श्रोदणिक्षकालिके इमानि पुष्पाणि ॥ ततः क्रां
हृदयाय नमः ॥ क्रीं शिरसे स्वाहा ॥ क्रूं शिखायै
वषट् ॥ क्रैं कवचाय हुं ॥ क्रौं नेत्रत्रयाय वौषट् ॥
क्रः अस्त्राय फट् ॥ इतिषडङ्गपूजां कृत्वा ॥ प्रथम-
त्रिकोणे वामावर्त्तेन स्वाग्रादि ॥ ओं काल्यै नमः ॥
ओं कपालिन्यै नमः ॥ ओं कूल्वायै नमः ॥ द्वितीये
स्वाग्रादि ॥ ओं कुरुकुल्वायै नमः ॥ ओं विरोधिन्यै
नमः ॥ ओं विप्रचित्तायै नमः ॥ तृतीये स्वाग्रादि ॥
ओं उग्रायै नमः ॥ ओं उग्रप्रभायै नमः ॥ ओं
दीप्तायै नमः ॥ चतुर्थे स्ववामाग्रादि ॥ ओं नीलायै
नमः ॥ ओं घनायै नमः ॥ ओं बलाकायै नमः ॥
पञ्चमे स्ववामाग्रादि ॥ ओं मात्रायै नमः ॥ ओं
मुद्रायै नमः ॥ ओं मितायै(१) नमः ॥ अष्टदलेषु ॥
ओं ब्राह्म्यै नमः ॥ ओं नारायण्यै नमः ॥ ओं
माहेश्वर्यै नमः ॥ ओं चामुण्डायै नमः ॥ ओं
कौमार्यै नमः ॥ ओं अपराजितायै नमः ॥ ओं
वाराह्यै नमः ॥ ओं नारसिंह्यै नमः ॥ इतिवामा-

(१) पटले तु मित्राशब्दः ।

वर्त्तेन सम्पूज्य ॥ चतुरस्त्रे प्रादक्षिण्येन ॥ लं इन्द्राय नमः ॥ रं अग्नये नमः ॥ ढं यमाय नमः ॥ क्षां निर्ऋतये नमः ॥ वं वरुणाय नमः ॥ यं वायवे नमः ॥ सं सोमाय नमः ॥ हं ईशानाय नमः ॥ आं ब्रह्मणे नमः ॥ ह्रीं अनन्ताय नमः ॥ वज्राय नमः ॥ शक्तये नमः ॥ दण्डाय नमः ॥ खड्गाय नमः ॥ पाशाय नमः ॥ अङ्कुशाय नमः ॥ गदायै नमः ॥ चक्राय नमः ॥ त्रिशूलाय नमः ॥ पद्माय नमः ॥ इत्थमावरणपूजां कृत्वा मूलेन देवीं सम्पूज्य ॥ मूलं श्रीदक्षिणकालिके एष ते धूपः ॥ मूलं श्रीदक्षिणकालिके एष ते दीपः ॥ मूलं श्रीदक्षिणकालिके इदं नैवेद्यम् ॥ मूलं श्रीदक्षिणकालिके इदमाचमनीयम् ॥ देवीं भुञ्जानां ध्यात्वा उत्तराऽपोशनार्थमुदकं दत्त्वा ॥ मूलं श्रीदक्षिणकालिके इदं साम्बुत्रितन्तो(१) ॥ मूलेन पुष्पाञ्जलिं दत्त्वा ॥ मूलं श्रीदक्षिणकालिके इदमारत्रिकं एवं सम्पूज्य प्राणायामत्रयऋष्यादिकषडङ्गन्यासपूर्वकं मूलं यथाशक्तिजप्त्वा जपं समर्प्य तां प्रणम्य निर्माल्यमुद्धृत्य संहारमुद्रया स्वहृदि विसृज्य श्रीगुरुं प्रणमेत् ॥

इतिश्रीमहामहात्मतन्त्रे कालिकापूजासङ्क्षिप्तपद्धतिः समाप्ता ।

---

(१) अयं स्वर्धं. ऽयमेव पाठः ।

अथ श्यामाकवचम्।

भैरव्युवाच। कालीपूजा श्रुता नाथ भावाश्च विविधाः प्रभो। इदानीं श्रोतुमिच्छामि कवचं पूर्व्व सूचितम्। त्वमेव शरणं नाथ त्राहि मां दुःखसङ्कटात्। भैरव उवाच। रहस्यं शृणु वक्ष्यामि भैरवि प्राणवल्लभे। श्रीजगन्मङ्गलं नाम कवचं मन्त्रविग्रहम्। पठित्वा धारयित्वा वा त्रैलोक्यं मोहयेत् क्षणात्। नारायणोऽपि यद्धृत्वा नारी भूत्वा महेश्वरम्। योगेशं क्षोभमनयत् यद्धृत्वा च रघूद्वहः। वरदृप्तान् जघानैव रावणादिनिशाचरान्। यस्य प्रसादादीशोऽहं त्रैलोक्यविजयी प्रभुः। धनाधिपः कुवेरोऽपि सुरेशो ऽभूत् शचीपतिः। एवं हि सकला देवाः सर्व्वसिद्धीश्वराः प्रिये। श्रीजगन्मङ्गलस्यापि कवचस्य ऋषिः शिवः। छन्दोऽनुष्टुप् देवता च कालिका दक्षिणेरिता। जगतां मोहने दुष्टविजये भुक्तिमुक्तिषु। योषिदाकर्षणे चैव विनियोगः प्रकीर्त्तितः। शिरो मे कालिका पातु क्रींकारैकाक्षरी परा। क्रीं क्रीं क्रीं मे ललाटं च कालिका खड्गधारिणी। हूं हूं पातु नेत्रयुग्मं ह्रीं ह्रीं पातु श्रुतिं मम। दक्षिणे कालिके पातु घ्राणयुग्मं महेश्वरी। क्रीं क्रीं क्रीं रसनां पातु हूं हूं पातु कपोलकम्। वदनं सकलं पातु

ह्रीं ह्रीं स्वाहास्वरूपिणी। द्वाविंशत्यक्षरो स्कन्धौ महाविद्या सुखप्रदा। खड्गमुण्डधरा काली सर्व्वाङ्गमभितोऽवतु। क्रीं क्रीं क्रीं त्र्यक्षरी पातु चामुण्डा हृदयं मम। ऐं हूं ओं ऐं स्तनद्वन्द्वं फट् स्वाहा च ककुत्स्थलम्। अष्टाक्षरी महाविद्या भुजौ पातु सकर्त्तृका। क्रीं क्रीं हूं हूं ह्रीं ह्रीं करौ पातु षड़क्षरी मम। हूं ओं ह्रीं क्रीं मे स्वाहा पातु कालिका जानुनी सदा। कालीहृन्नामविद्येयं चतुर्वर्गफलप्रदा। क्रीं नाभिं मध्यदेशं च दक्षिणे कालिके ऽवतु। क्रीं हूं ह्रीं च स्वाहापदं पातु चतुर्द्दशाक्षरी मम। खड्गमुण्डधरा काली वरदाभयधारिणी। विद्याभिः सकलाभिः सा सर्व्वाङ्गमभितो ऽवतु। काली कपालिनी कुल्वा कुरुकुल्वा विरोधिनी। विप्रचित्ता तथा चोग्रप्रभा दीप्ता घनत्विषः। नीला घना वलाका च मात्रा मुद्रा मिता च माम्। एताः सर्व्वाः खड्गकरा मुण्डमालाविभूषिताः। रक्षन्तु दिग्विदिक्षु मां ब्राह्मी नारायणी तथा। माहेश्वरी च चामुण्डा कौमारी चापराजिता। वाराही नारसिंही च सर्व्वाश्चामितभूषणाः। रक्षन्तु सायुधैर्द्दिक्षु विदिक्षु मां यथा तथा। इति ते कथितं दिव्यं कवचं परमाद्भुतम्। श्रीजगन्मङ्गलं नाम महामन्त्रौघविग्रहम्।

त्रैलोक्याकर्षकं ब्रह्मकवचं मन्मुखोदितम्। गुरुपूजां विधायाथ विधिवत् प्रपठेत्ततः। कवचं त्रिः सकृद्वापि यावज्जीवं च वा पुनः। एतच्छतार्द्धमावृत्य त्रैलोक्य-विजयी भवेत्। त्रैलोक्यं क्षोभयत्येव कवचस्य प्रसा-दतः। महाकाली भवेन्मासात् सर्व्वसिद्धीश्वरो भवेत्। पुष्पाञ्जलीन् कालिकायै मूलेनैव पठेत् सकृत्। शतवर्षसहस्राणां पूजायाः फलमाप्नुयात्। भूर्जे वि-लिखितं चैतत् स्वर्णस्थं धारयेत् यदि। त्रैलोक्यं मोहयेत् क्रोधात् त्रैलोक्यं चूर्णयेत् क्षणात्। पुत्रवान् धनवान् श्रीमान् नानाविद्यानिधिर्भवेत्। ब्रह्मास्त्रा-दीनि शस्त्राणि तद्गात्रस्पर्शनात्ततः। नाशमाया-न्ति या नारी बन्ध्या वा मृतपुत्रिणी। कण्ठे वा वा-मबाहौ वा कवचस्य च धारणात्। बहुपत्या जीववत्सा भवत्येव न संशयः। न देयं परशिष्येभ्यः अभक्तेभ्यो विशेषतः। शिष्येभ्यो भक्तियुक्तेभ्यश्चान्यथा मृत्यु-माप्नुयात्। ज्ञातव्यं कवचं दिव्यं निश्चितं कालि-साधकैः। अन्यथा फलभाक् नैव भवेदिति सुनि-श्चितम्। गुरौ भक्तिः सदा कार्य्या कवचे च दृढा मतिः। तस्मै सा कालिका देवी सर्व्वसिद्धिं प्रय-च्छति। इति भैरवतन्त्रे भैरवभैरवीसंवादे काली-कल्पे जगन्मङ्गलं नाम श्यामाकवचं समाप्तम्

कवचान्तम् ।

कैलासशिखरारूढं भैरवं चन्द्रशेखरम् । वक्षः
स्थलसमासीना भैरवी परिपृच्छति ॥ १ ॥ श्रीभैर-
व्युवाच । देवेश परमेशान लोकानुग्रहकारक ।
कवचं सूचितं पूर्वं किमर्थं न प्रकाशितम् ॥ २ ॥
यदि मे महती प्रीतिस्तवास्ति कुलभैरव । कवचं
कालिकादेव्याः कथयस्वानुकम्पया ॥ ३ ॥ श्रीभैरव
उवाच । अप्रकाश्यमिदं देवि नरलोके विशेषतः ।
लक्षवारं वारितापि स्वस्वभावाद्धि पृच्छसि ॥ ४ ॥
श्रीभैरव्युवाच । सेवका बहवो देव कुलधर्मपरा-
यणाः । यतस्ते त्यक्तजीवाशाः शवोपरि चितोपरि ॥
५ ॥ तेषां प्रयोगसिद्ध्यर्थं स्वरक्षार्थं विशेषतः । पृ-
च्छामि बहुशो देव कथयस्व दयानिधे ॥ ६ ॥ श्री-
भैरव उवाच । कथयामि शृणु देवि कालिकाकवचं
परम् । गोपनीयं पशोरग्रे स्वयोनिरपरे यथा ॥ ७ ॥
सर्वविद्यामहाराज्ञी कालिकाकवचस्य च । ओं म
हाकालीदेवीकवचस्य भैरव ऋषिः उष्णिक् छन्दो
ऽद्वैतरूपिणी कालिका देवता हुं बीजं ह्रीं शक्तिः
क्रीं कीलकं मम सर्वार्थसाधनपुरःसरमन्त्रसिद्ध्यर्थे
विनियोगः । सहस्रारे महापद्मे कर्पूरधवलो गुरुः ॥
८ वं स्वस्मोरुस्थिततच्छक्तिः सदा सर्वत्र रक्षतु ।

परमार्थगुरुः पातु परापरगुरुस्तथा ॥ ९ ॥ परमेष्ठी गुरुः पातु महादेवस्तथावतु । त्रिपुरो भैरवः पातु दिव्यरूपधरः सदा ॥ १० ॥ ब्रह्मानन्दः सदा पातु पूर्णदेवस्तथावतु । चलच्चित्तः सदा पातु चलाच्चलश्च पातु माम् ॥ ११ ॥ कुमारः क्रोधनश्चैव वरदः स्मरदीपनः । मायी मायावती चैव सिद्धौघाः पान्तु मां सदा ॥ १२ ॥ विमल कुशलश्चैव भीमसेनः सुधाकरः । मीनो गोरक्षकश्चैव भोजदेवः प्रजापतिः ॥ १३ ॥ मूलदेवो रतिर्देवो विघ्नेश्वरो हुताशनः । सन्तोषः समयानन्दः पातु मामेनसः सदा ॥ १४ ॥ सर्वेऽप्यानन्दनाथान्ता अम्बानां मातरः क्रमात् । विघ्नेशो गणनाथश्च सदा भैरवः पातु माम् ॥ १५ ॥ बटुकोनः सदा पातु दुर्गा मां परिरक्षतु । शिरसः पादपर्यन्तं पातु मां घोरदक्षिणा ॥ १६ ॥ तथा शिरसि मां काली हृदि मूले च रक्षतु । सम्पूर्णविद्यया देवी सदा सर्वत्र रक्षतु ॥ १७ ॥ क्रीं क्रीं क्रीं वदनं पातु हुं हुं हुं हुं ह्रीं सदावतु । ह्रूं ह्रूं पातु सदाधारे कालिके दक्षिणे हृदि ॥ १८ ॥ ह्रूं ह्रूं पूर्वं ह्रूं ह्रूं दक्षे क्रीं क्रीं क्रीं वामतोऽवतु । पृष्ठे पातु सदा स्वाहा मूलं सर्वत्र रक्षतु ॥ १९ ॥ षडङ्गयुवती पातु षडङ्गेषु सदैव माम् । मन्त्रराजः सदा [illegible]

धोदिक्विदिक्स्थितः ॥ २० ॥ चक्रराजस्थिताश्चापि देवताः परिपान्तु माम् । उग्रा उग्रप्रभा दीप्ता पातु पूर्वत्रिकोणके ॥ २१ ॥ नीला घना बलाका च तथा-परत्रिकोणके । मात्रामुद्रामिताश्चैव तथा मध्ये त्रिकोणके ॥ २२ ॥ काली कपालिनी कुल्वा कुरुकुल्वा विरोधिनी । वहिःषट्कोणगाः पान्तु विप्रचित्ता तथा प्रिये ॥ २३ ॥ सर्वशाखामुहुर्धोरावामहस्तेन तर्जनी । ब्राह्मी पूर्वदले पातु नारायणी तथाग्निके ॥ २४ ॥ माहेश्वरी दक्षदले चामुण्डे राक्षसेऽवतु । कौमारी पश्चिमे पातु वायव्ये चापराजिता ॥ २५ ॥ वाराही चोत्तरे पातु नारसिंही शिवेऽवतु । ऐं ह्रीं असिताङ्गपूर्वी भैरवः परिरक्षतु ॥ २६ ॥ ऐं ह्रीं रूरूश्चाग्निकोणे ऐं ह्रीं चण्डः सुदक्षिणे । ऐं ह्रीं क्रोधो नैर्ऋत्येऽव्यात् ऐं ह्रीं उन्मत्तकस्तथा ॥ २७ ॥ पश्चिमे ऐं ह्रीं मां पातु कपाली वायुकोणके । ऐं ह्रीं भीषणनामा च उत्तरेऽवतु भैरवी ॥ २८ ॥ ऐं ह्रीं संहार ऐशान्यां मातॄणामङ्कगाः शिवाः । ऐं ह्रीं बटुकः पूर्वदले पातु सदैव माम् ॥ २९ ॥ ऐं त्रिपुरान्तकबटुक आग्नेय्यां सर्वदावतु । ऐं बटुको वन्हिवैतालो दक्षिणे मां सदावतु ॥ ३० ॥ ऐं अग्निजिह्वाबटुकः स्वर्ध...र्यां पश्चिमे तथा । ऐं कालबटुकः पातु

ऐं करालबटुकस्तथा ॥ ३१ ॥ वायव्यामेकपादः उत्तरे वटुकोऽवतु । ऐं भीमवटुकः पातु ऐशान्यां दिशि मां सदा ॥ ३२ ॥ ऐं ह्रीं क्रीं हुं फट् स्वाहादयाश्चतुःषष्टिश्च मातरः । उर्द्ध्वाधोदशवामाग्रपृष्ठदेशेषु पातु माम् ॥ ३३ ॥ ऐं ह्रीं सिंहव्याघ्रमुखी पूर्वे मां परिरक्षतु । ऐं कं कां सर्पाहितमुखो अग्निकोणे सदावतु ॥ ३४ ॥ ऐं मां मां मृगमेषमुखी दक्षिणे मां सदावतु । ऐं चौं चौं गजवाजिमुखी नैर्ऋत्यां च सदावतु ॥ ३५ ॥ ऐं में में बीं जलमुखी पश्चिमे पातु मे सदा । ऐं खौं खौं क्रोष्ट्रश्वमुखी वायुकोणे सदावतु ॥ ३६ ॥ ऐं हां हां ह्रस्वमुखी लम्बोदरमहोदरी । पातु मामुत्तरे कोणे ऐं ऐं ह्रीं ह्रीं शिवकोणके ॥ ३७ ॥ ह्रस्वजङ्घा तालजङ्घा प्रलम्बोष्ठी सदावतु । एताः श्मशानवासिन्योऽभीष्टदा विकृताननाः ॥ ३८ ॥ पातु मां सर्वदा देवी साधकाभीष्टपूरिका । इन्द्रो मां पूर्वतो रक्षेदाग्नेय्यामग्निरेव च ॥ ३९ ॥ दक्षे यमः सदा पातु नैर्ऋत्यां निर्ऋतिश्च माम् । वरुणोऽवतु मां पश्चात् वायुर्मां पातु वायवे ॥ ४० ॥ कुबेरश्चोत्तरे पातु इशान्यां तु सदाशिवः । ऊर्द्ध्वं ब्रह्मा सदा पातु अधश्चानन्तदेवता ॥ ४१ ॥ पूर्वादिदिक्स्थिताः पान्तु[illegible]

श्च गणाश्च माम्। कालिके पातु शिरसि हृदये कालिकावतु ॥ ४२ ॥ दिक्षु मां कालिका पातु विदिक्षु कालिकावतु। ऊर्ध्वं मे कालिका पातु अधश्च कालिकावतु ॥ ४३ ॥ चर्मासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि मेऽवतु। इन्द्रियाणि मनश्चैव देहसिद्धिश्च मे ऽवतु ॥ ४४ ॥ आकेशात्पादपर्यन्तं कालिका मे सदावतु। विशन्तं कालिका पातु पथि मां कालिकावतु ॥ ४५ ॥ शयने कालिका पातु दारान्मे पातु कालिका। पुत्रान्मे कालिका पातु धनं मे कालिकावतु ॥ ४६ ॥ ये च मे संशया विघ्नाः तान्नाशयतु कालिका। इतीदं कवचं देव्या ब्रह्मलोकेऽपि दुर्लभम् ॥ ४७ ॥ तव प्रीत्या मयाख्यातं गोपनीयं स्वयोनिवत्। तव नाम्नि स्मृते देवि सर्वयज्ञफलं लभेत् ॥ ४८ ॥ सर्वपापं क्षयं याति वाञ्छा सर्वत्र विन्दति। नाम्नः शतगुणं स्तोत्रं ध्यानं तस्मात् शताधिकम् ॥ ४९ ॥ शुचिः समाहितो भूत्वा भक्तिश्रद्धासमन्वितः। संस्थाप्य वामभागे तु शक्तिं स्वामिपरायणाम् ॥ ५० ॥ रक्तवस्त्रसमासीनां शिवमन्त्रधरां शुभाम्। या शक्तिः सा महादेवी शिवरूपस्तु साधकः ॥ ५१ ॥ अन्योन्यं चिन्तनाद्देवि देवत्वमुपजायते। शक्तियुक्तो यजेद्देवि चक्रे वा मनसा-

पि ताम् ५२ ॥ भोगैश्च मधुपर्कादैः ताम्बूलादैः सुवेशितैः । ततस्तु कवचं दिव्यं पठेद्देवि मनाक् प्रिये ॥ ५३ ॥ तस्य सर्वार्थसिद्धिः स्यान्नात्र कार्या विचारणा । इदं रहस्यं परमं परं स्वस्त्ययनं महत् ॥ ५४ ॥ यः संस्कृत्य पठेद्देवि शृणुयाद्वा समाहितः । स सर्वान् लभते कामान् परं देवीपुरं व्रजेत् ॥ ५५ ॥ सर्वयज्ञफलं तस्य भवेदेव न संशयः । सङ्ग्रामेषु जयेत् शत्रून्मातङ्गानिव केसरी ॥ ५६ ॥ नास्त्राणि तस्य शस्त्राणि शरीरे प्रभवन्ति हि । न स्यात् व्याधिः कदाचित्तु दुःखं नास्ति कदाचन ॥ ५७ ॥ गतिस्तस्यैव सर्वत्र वायोस्तुल्या सदा भवेत् । दीर्घायुः कामभोगीशो गुरुभक्तिर्भवेत्सदा ॥ ५८ ॥ अहो कवचमाहात्म्यं पठमानस्य नित्यशः । विनापि योगचर्येण योगिनां समतां व्रजेत् ॥ ५९ ॥ भूर्जे त्वचि समालिख्य चक्रं तत्र विनिर्मितम् । मध्यत्रिकोणे संलिख्य साध्यसाधकयोर्लिपिम् ॥ ६० ॥ उद्धरेन्मूलमन्त्रेण मातृकार्णेन वेष्टयेत् । लघुमिश्रेण चन्द्रेण चन्दनाभ्यां च सुन्दरि ॥ ६१ ॥ एतदास्त्रं महेशानि सुरासुरसुदुर्लभम् । गोरोचनाकुङ्कुमेन तद्वाहेर कवचं लिखेत् ॥ ६२ ॥ श्वेतसूत्रेण संवेष्ट्य लाक्षया परिमण्डयेत् । पञ्चामृतैः पञ्च... सम्प-

यित्वा शुभे ऽहनि ॥ ६३ ॥ सम्पूज्य देवतारूपां गुटिकां सर्व्वकामदाम् । प्राणप्रतिष्ठामन्त्रेण प्राणं तत्र नियोजयेत् ॥ ६४ ॥ अन्तर्योनिं ततो ध्यात्वा तत्र संस्थापयेद्बुधः । एषा ते गुटिका देवि कण्ठ-लग्नाखिलप्रदा ॥ ६५ ॥ शीर्षे वश्यकरा देवि नाभौ स्तम्भनकारिणी । बद्धा वामभुजे ह्येषा वैरीपक्षक्ष-यङ्करी ॥ ६६ ॥ जठरे रोगदमनी पुत्रदा हृदि सं-स्थिता । विद्याकरी ललाटस्था शिखायां तु यशः-प्रदा ॥ ६७ ॥ सर्व्वकामप्रदा देवी सर्व्वरोगक्षय-ङ्करी । दक्षिणे बाहुमूले वै यदि तिष्ठति सर्वदा ॥ ६८ ॥ तदा सर्वार्थसिद्धिः स्यात् यद्यन्मनसि वर्तते । ऽयहा तु कवचस्यास्य पठनाद्धारणात्प्रिये ॥ ६९ ॥ सर्वान्कामानवाप्नोति तव स्नेहात् प्रकाशितम् । गु-रोः पादप्रसादेन सद्विद्या यदि लभ्यते ॥ ७० ॥ तथैव कवचं देवि त्रिषु लोकेषु दुर्ल्लभम् । स च दे-वो हरिः साक्षात्तत्पत्नी परमेश्वरी ॥ ७१ ॥ यस्य भ-क्तिर्गुरौ नित्यं वर्तते देववत्प्रिये । तदा मन्त्रस्य य-न्त्रस्य सिद्धिर्भवति नान्यथा ॥ ७२ ॥ कवचस्य सदा सिद्धिः गुटिकायाश्च सुन्दरि । अज्ञात्वा कवचं देवि न दृष्ट्वा गुरुपादुकाम् ॥ ७३ ॥ तत्फलं न समाप्नोति प्रे[illegible] स्वर्गं व्रजेत् । सत्यं सत्यं पुनः सत्यं सत्यं

सत्यं पुनः पुनः ॥ ७४ ॥ न शक्नोमि प्रभावं तु कवचस्य च वर्णितुम्। यस्मै कस्मै न दातव्यं कवचेशं सुदुर्लभम् ॥ ७५ ॥ न देयं परशिष्येभ्यो कृपणेभ्यश्च सुन्दरि। शिष्याय भक्तिहीनाय लुब्धकाय तथैव च ॥ ७६ ॥ गुरुभक्तिविहीनाय परदाररताय च। सेवकाय कुशीलाय दाम्भिकाय च सुन्दरि॥ ७७॥ न दद्यात् वै निषिद्धेभ्यो कवचं मन्मुखोदितम्। देयं शिष्याय शान्ताय गुरुभक्तिपराय च ॥ ७८ ॥ सर्वलक्षणयुक्ताय तन्त्रयन्त्रयुताय च ॥ ७९ ॥

इतिश्रीभैरवीतन्त्रे महाकालीकवचं समाप्तम् ॥

## कालिकासहस्रनामस्तोत्रम्।

शिव उवाच। कथितो ऽयं महामन्त्रः सर्वमन्त्रोत्तमोत्तमः। यमासाद्य मया प्राप्तमैश्वर्यपदमुत्तमम् ॥ १ ॥ संयुक्तः परया भक्त्या यथोक्तविधिना भवान्। कुरुतामर्च्चनं देव्याः त्रैलोक्यविजिगीषया ॥ २ ॥ श्रीराम उवाच। प्रसन्नो यदि मे देव परमेश पुरातन। रहस्यं परया देव्याः कृपया कथय प्रभो ॥३॥ विनार्च्चनं विना होमं विना न्यासं विना बलिम्। विना गन्धं विना पुष्पं विना नित्योदितक्रियाम् ॥

४ ॥ प्राणायामं विना ध्यानं तथा कालो प्रसीदति ॥ ५ ॥ शिव उवाच । पृष्टं त्वयोत्तमं प्राज्ञ भृगुवंशसमुद्भव । भक्तानामपि भक्तोऽसि त्वमेव साधयिष्यसि ॥ ६ ॥ देवीं दानवकोटिघ्नीं लीलया रुधिरप्रियाम् । सदा स्तोत्रप्रियामुग्रां कामकौतुकलालसाम् ॥ ७ ॥ सर्वदानन्दहृदयामासवासक्तमानसाम् । माध्वीकमत्स्यमांसानुरागिणीं वैष्णवीं पराम ॥ ८ ॥ श्मशानवासिनीं प्रेतगणनृत्यमहोत्सवाम् । योगप्रभां योगिनीशां(१) योगीन्द्रहृदयस्थिताम् ॥९॥ तामुग्रकालिकां राम प्रसादयितुमर्हसि । तस्याः स्तोत्रं महापुण्यं(२) स्वयं काल्या प्रकाशितम् ॥१०॥ तव तत् कथयिष्यामि श्रुत्वा वत्सावधारय । गोपनीयं प्रयत्नेन पठनीयं परात्परम् ॥ ११ ॥ यस्यैककालपठनात् सर्वे विघ्नाः समाकुलाः । नश्यन्ति दहने दीप्ते पतङ्गा इव सर्वतः ॥ १२ ॥ गद्यपद्यमयी वाणी भवेद्गङ्गाप्रवाहवत् । तस्य दर्शणमात्रेण वादिनो निष्प्रभा मताः ॥ १३ ॥ राजानोऽपि च दासत्वं भजन्ते किं परे जनाः । तस्य हस्ते सदैवास्ति सर्वसिद्धिर्न संशयः ॥ १४ ॥ निशीथे मुक्तकेशस्तु

(१) योग—— [illegible] योगेशीं—पा० २ पु० । (२) परं पुण्यं—पा० २ प० ।

नग्नः शक्तिसमन्वितः । मनसा चिन्तयेत् कालीं महाकालेन लालिताम् ॥ १५ ॥ पठेत् सहस्रनामाख्यं स्तोत्रं मोक्षस्य साधनम् । प्रसन्ना कालिका तस्य पुत्रत्वेनानुकम्पते ॥ १६ ॥ यथा ब्रह्मामृतैर्ब्रह्मकुसुमैः पूजिता परा । प्रसीदति तथानेन स्तुता काली प्रसीदति ॥१७॥ ओं अस्य श्रीदक्षिणकालिकासहस्रनामस्तोत्रस्य महाकालभैरव ऋषिः अनुष्टुप्छन्दः श्मशानकालिका देवता धर्मार्थकाममोक्षार्थे विनियोगः । ओं श्मशानकालिका काली भद्रकाली कपालिनी । गुह्यकाली महाकाली कुरुकुल्वा विरोधिनी ॥ १८ ॥ कालिका कालरात्रिश्च महाकालनितम्बिनी । कालभैरवभाव्या च(१) कुलधर्मप्रकाशिनी ॥ १९ ॥ कामदा कामिनी काम्या कमनीयस्वभाविनी । कस्तूरीरसनीलाङ्गी कुञ्जरेश्वरगामिनी ॥ २० ॥ ककारवर्णसर्वाङ्गी कामिनी कामसुन्दरी । कामार्त्ता कामरूपा च कामधेनुः कलावती ॥ २१ ॥ कान्ता कालस्वरूपा(२)च कामाख्या कुलपालिनी । कुलीना कुलवत्यम्बा दुर्गा दुर्गतिनाशिनी ॥ २२ ॥ कौमारी कुलजा कृष्णा कृष्णदेहा कृशोदरी ।

(१) भार्या च—पा० २ पु० । (२) कामस्वरूपा—पा० ३ पु० ।

कृष्णाङ्गी कुलसङ्गी(१) च क्रोंकारी कमला कला ॥ २३ ॥ करालास्या कराली च कुलकान्तापराजिता । उग्रा चोग्रतरा(२) दीप्ता विप्रचित्ता महामनाः(३)॥ २४ ॥ नीला घना मेघनादा(४)मात्रा मुद्रा मितासिता । ब्राह्मी नारायणी भद्रा सुभद्रा भक्तवत्सला ॥ २५ ॥ माहेश्वरी च चामुण्डा वाराही नारसिंहिका । वज्राङ्गी वज्रकङ्काला नृमुण्डा स्रग्विनी शिवा(५) ॥ २६ ॥ मालिनी नरमुण्डाली गलद्रक्तविभूषणा । रक्तचन्दनसिक्ताङ्गी सिन्दूरारुणमस्तका ॥ २७ ॥ घोररूपा घोरदंष्ट्रा घोरा घोरतरा शिवा(६) । महादंष्ट्रा महामाया सुन्दरी(७) युगदन्तुरा ॥ २८ ॥ सुलोचना विरूपाक्षी विशालाक्षी त्रिलोचना । शारदेन्दुप्रसन्नास्या स्फुरत्स्मेराम्बुजेक्षणा ॥ २९ ॥ अट्टहास्या प्रसन्नास्या स्मेरवक्त्रा सुभाषिणी । प्रसन्ना पद्मवदना(८) स्मितास्या प्रियभाषिणी ॥ ३० ॥ कोटराक्षी कुलश्रेष्ठा महती बहुभाषिणी । सुमतिः कुमतिश्चण्डा चण्डमुण्डातियोगिनी(९) ॥ ३१ ॥

(१) कृशाङ्गी कुलिशाङ्गी च—पा० २ पु० । (२) उग्रप्रभा—पा० २ पु० । (३) महाबला—पा० २ पु० । (४) बलाका च—पा० २ पु० । (५) नृमुण्डास्रग्विलासिनी—पा० २ पु० । (६) शुभा—पा० १ पु० । (७) सुदती—पा० २ पु० । (८ प्रफुल्लपद्मवदना—पा० २ पु० । [illegible]गिनी—पा० २ पु० ।

प्रचण्डा चण्डिका चण्डी चर्च्चिका चण्डवेगिनी।
सुकेशी मुक्तकेशी च दीर्घकेशी महावला(१) ॥३२॥
प्रेतदेहा कर्णपूरा प्रेतपाणिसुमेखला। प्रेतासना
प्रियप्रेता प्रेतभूमिकृतालया ॥ ३३ ॥ श्मशान-
वासिनी पुण्या पुण्यदा कुलपण्डिता। पुण्यालया
पुण्यदेहा पुण्यश्लोका च पावनी ॥ ३४ ॥ पूता
पवित्रा परमा परा पुण्यविभूषणा। पुण्यनाम्नी
भीतिहरा वरदा खड्गपाणिनी ॥३५॥ नृमुण्डहस्ता
शस्त्रा च छिन्नमस्ता सुनासिका(२)। दक्षिणा
श्यामला श्यामा शान्ता पीनोन्नतस्तनी ॥ ३६ ॥
दिगम्बरा घोररूपा सृक्कान्तरक्तवाहिनी। घोररावा
शिवासङ्गा विसङ्गी(३) मदनातुरा ॥ ३७ ॥ मत्ता
प्रमत्ता प्रमदा सुधासिन्धुनिवासिनी। अतिमत्ता
महामत्ता सर्वाकर्षणकारिणी ॥ ३८ ॥ गीतप्रिया
वाद्यरता प्रेतनृत्यपरायणा। चतुर्भुजा दशभुजा
अष्टादशभुजा तथा ॥ ३९ ॥ कात्यायनी जगन्माता
जगती परमेश्वरी। जगद्बन्धुर्जगद्धात्री जगदानन्द-
कारिणी ॥ ४० ॥ जगज्जीवमयी हैमवती माया
महामही(४)। नागयज्ञोपवीताङ्गी नागिनी नाग-

---

(१) महाकचा—पा० २ पु० ॥ (२) सुमस्तका—पा० २ पु० ॥
(३) निःशङ्का—पा० २ पु० ॥ (४) माया हैमवत्यनघा मङ्गला समर पु०॥

शायिनी ॥ ४१ ॥ नागकन्या कुरङ्गाक्षी(१) गान्धर्वी किन्नरेश्वरी । मोहरात्रिर्महारात्रिर्दारुणा भासुरासुरा(२) ॥ ४२ ॥ विद्याधरी वसुमती यक्षिणी योगिनी जरा । राक्षसी डाकिनी वेदमयी वेदविभूषणा(३) ॥४३॥ श्रुतिः स्मृतिर्महाविद्या(४) गुह्यविद्या पुरातनी । चिन्त्या ऽचिन्त्या स्वधा स्वाहा निद्रा तन्द्रा च पार्वती ॥ ४४ ॥ अपर्णा निश्चला लोला(५) सर्वविद्या तपस्विनी । गङ्गा काशी शची सीता सती सत्यपरायणा ॥ ४५ ॥ नीतिः सुनीतिः सुरुचिस्तुष्टिः पुष्टिर्धृतिः क्षमा । वाणी बुद्धिर्महालक्ष्मीर्लक्ष्मीर्नीलसरस्वती ॥ ४६ ॥ स्रोतस्वती सरस्वती(६) मातङ्गी विजया जया । नदी सिन्धुस्सर्वमयी तारा शून्यनिवासिनी(७) ॥ ४७ ॥ श्रद्धा(८) तरङ्गिणी मेधा डाकिनी(९) बहुरूपिणी । स्थूला सूक्ष्मा सूक्ष्मतरा भगवत्यणुरूपिणी ॥ ४८ ॥ परमाणु(१०)स्वरूपा च चिदानन्दस्वरूपिणी । सदा-

(१) देवकन्या—पा० २ पु० । (२) भासुरेश्वरी—पा० २ पु० ।
(३) देवमयी देवविभूषणा—पा० २ पु० ।
(४) धृतिर्विद्या—पा० २ पु० । (५) मौना—पा० २ पु० ।
(६) वसुमती—पा० २ पु० । (७) विनाशिनी—पा० १ पु० ।
(८) शुद्धा—पा० २ पु० । (९) लाकिनी—पा० २ पु० ।
(१०) [illegible]—पा० २ पु० ।

नन्दमयी सत्या सर्वानन्दस्वरूपिणी ॥ ४९ ॥ सुनन्दा नन्दिनी स्तुत्या स्तवनीयस्वरूपिणी(१)। रङ्गिणी डङ्किनी(२) चित्रा विचित्रा चित्ररूपिणी ॥ ५० ॥ पद्मा पद्मालया पद्ममुखी पद्मविभूषणा। हाकिनी शाकिनी शान्ती(३)राकिनी रुधिरप्रिया ॥ ५१ ॥ भ्रान्तिर्भवानी रुद्राणी मृडाणी शत्रुमर्द्दिनी। उपेन्द्राणी महेशानी जोत्स्ना च चन्द्ररूपिणी(४) ॥ ५२ ॥ सूर्यात्मिका रुद्रपत्नी रौद्री स्त्री प्रकृतिः पुमान्। शक्तिः सूक्तिर्मतिमती(५) भुक्तिर्मुक्तिः पतिव्रता ॥ ५३ ॥ सर्वेश्वरी सर्वमाता सर्वाणी हरवल्लभा। सर्वार्चा(६) सिद्धिदा सिद्धा भव्या भाव्या भयापहा ॥ ५४ ॥ कर्त्री हर्त्री पालयित्री शर्वरी तामसी दया(७)। तमिस्रा तामसी स्थाणुः(८) स्थिरा धीरा तपस्विनी ॥ ५५ ॥ चार्वङ्गी चञ्चला लोलजिह्वा चारुचरित्रिणी। त्रपा त्रपावती लज्जा विलज्जा ह्रीरजोवती ॥ ५६ ॥ सत्त्ववती धर्मनिष्ठा श्रेष्ठा निष्ठुरनाशिनी(९)। गरिष्ठा दुष्टसंहर्त्री विशिष्टा श्रेयसी घृणा

---

(१) स्वभाविनी—पा० २ पु०। (२) टङ्कणी—पा० २ पु०।
(३) क्षान्ता—पा० २ पु०। (४) चक्रस्वरूपिणी—पा० २ पु०।
(५) सूक्तिर्मतिर्माता—पा० २ पु०। (६) सर्वज्ञा—पा० २ पु०।
(७) जया—पा० २ पु०। (८) यामिनी स्थास्नुः—पा० २ पु०।
(९) मादिनी—पा० पु २०।

॥ ५७ ॥ भीमा भयानका भीमनादिनी भीः प्रभा-
वती । वागीश्वरी श्रीर्यमुना यज्ञकर्त्री यजुःप्रिया ॥
५८॥ ऋक्सामाथर्वनिलया रागिणी शोभनस्वरा(१)।
कलकण्ठी कम्बुकण्ठी वेणुवीणापरायणा ॥ ५९ ॥
वशिनी वैष्णवी स्वच्छा(२) धरित्री जगदीश्वरी(३) ।
मधुमती कुण्डलिनी ऋद्धिः सिद्धिः शुचिस्मिता ॥
६०॥ रम्भोर्वशी रतीरामा रोहिणी रेवती मघा । श-
ङ्खिनी चक्रिणी कृष्णा गदिनी पद्मिनी तथा ॥ ६१ ॥
शूलिनी परिघास्त्रा च पाशिनी शार्ङ्गपाणिनी ।
पिनाकधारिणी धूम्रा सुरभी वनमालिनी ॥ ६२ ॥
रथिनी समरप्रीता वेगिनी रणपण्डिता । जटिनी
वज्रिणी नीला लावण्याम्बुधिचन्द्रिका ॥ ६३ ॥
बलिप्रिया सदापूज्या पूर्णा दैत्येन्द्रघातिनी(४) ।
महिषासुरसंहर्त्री(५) वशिनी रक्तदन्तिका ॥ ६४ ॥
रक्तपा रूधिराक्ताङ्गी रक्तखर्परहस्तिनी । रक्तप्रिया
मांसरूचिरासवासक्तमानसा ॥ ६५ ॥ गलच्छोणित-
मुण्डालीमुण्डमाला(६)विभूषणा । शवासना चि-
तान्तस्था माहेशी वृषवाहिनी ॥ ६६ ॥ व्याघ्रत्वग-

---

(१) व्यापिनी शोभनाम्बरा—पा० २ पु० ।

(२) वंशिनी वैष्णवी स्वेच्छा—पा० २ पु० ।

(३) धात्री त्रिजगदीश्वरी—पा० २ पु० । (४) माथिनी—पा० १ पु० ।

(५) [illegible] स्व[illegible]—पा० २ पु० । (६) कण्ठमाला—पा० २ पु० ।

म्बरा चीनचेलिनी सिंहवाहिनी । वामदेवी महादेवी गौरी सर्वज्ञभाविनी ॥ ६७ ॥ वालिका तरुणी वृद्धा वृद्धमाता जरातुरा । सुभ्रुर्विलासिनी ब्रह्मवादिनी ब्राह्मणी मही ॥ ६८ ॥ स्वप्नवती चित्रलेखा लोपामुद्रा सुरेश्वरी । अमोघारुन्धती तीक्ष्णा भोगवत्यनुरागिणी ॥६९॥ मन्दाकिनी मन्दहासा ज्वालामुख्यसुरान्तका । मानदा मानिनी मान्या माननीया मदोद्धता ॥ ७० ॥ मृदिमा मेदुरोन्मादा मेध्या साध्या प्रसाधिनी । सुमध्यानन्तगुणिनी सर्वलोकोत्तमोत्तमा ॥ ७१ ॥ जयदा जित्वरा जैत्री जयश्रीर्जयशालिनी । सुखदा शुभदा सत्या सभासङ्क्षोभकारिणी ॥ ७२ ॥ शिवदूती भूतिमती विभूतिर्भीषणानना । कौलिनी कुलजा कुन्ती कुलस्त्री कुलपालिका ॥ ७३ ॥ कीर्त्तिर्यशस्विनी भूषा भूष्या भूतपतिप्रिया । सगुणा निर्गुणा धृष्टा निष्ठा काष्ठा प्रतिष्ठिता ॥ ७४ ॥ धनिष्ठा धनदा धन्या वसुधा सुप्रकाशिनी । उर्वी गुर्वी गुरुश्रेष्ठा सद्‌गुणा त्रिगुणात्मिका ॥ ७५ ॥ महाकुलीना निष्कामा सकामा कामजीवनी । कामदेवकलारामाभिरामा शिवनर्त्तकी ॥ ७६ ॥ चिन्तामणिः कल्पलता जाग्रती दीनवत्सला । कार्त्तिकी कृत्तिका कृत्या अयोध्या विषमा समा ॥

७७ ॥ सुमन्त्रा मन्त्रिणी घूर्णा ह्लादिनी क्लेश-
नाशिनी । त्रैलोक्यजननी जुष्टा निर्मांसा काल-
रूपिणी(१) ॥ ७८ ॥ तडागनिम्नजठरा शुष्कमांसा-
स्थिमालिनी । अवन्ती मथुरा हृदया त्रैलोक्यपावनी-
श्वरी(२) ॥ ७९ ॥ व्यक्ताव्यक्तानेकमूर्तिः सशर्मा(३)
भीमनादिनी । क्षेमङ्करी शङ्करी च सर्वसम्मोह-
कारिणी ॥ ८० ॥ ऊर्द्ध्व तेजस्विनी कृत्या महातेज-
स्विनी तथा । अद्वैतभागिनी पूज्या सुरभी सर्वमङ्गला
॥ ८१ ॥ सर्वप्रियङ्करी भोग्या धरणी पिशिताशना ।
भयंङ्करी पापहरा निष्कलङ्का वशङ्करी ॥ ८२ ॥
आशा तृष्णा चन्द्रकला तन्द्रानादाम्बुवेगिनी ।
सहस्रसूर्यसङ्काशा चन्द्रकोटिसमप्रभा ॥ ८३ ॥
निशुम्भशुम्भहन्त्री च रक्तबीजविनाशिनी । मधुकैटभ
हन्त्री च दुर्गासुरविनाशिनी ॥ ८४ ॥ वह्निमण्डल-
मध्यस्था सर्वसत्त्वप्रतिष्ठिता । सर्वाचारवती सर्वदेव-
कन्याधिदेवता ॥ ८५ ॥ दक्षकन्या दक्षयज्ञनाशिनी
दुर्गतारिणी । इन्द्रपूज्या(४) विभा भूतिः सत्कीर्त्ति-
र्ब्रह्मरूपणी(५) ॥ ८६ ॥ रम्भोरुश्चतुरा राका

(१) मलरूपिणी—पा० २ पु० । (२) परमेश्वरी—पा० २ पु० ।
(३) सुरभी—पा० २ पु० । (४) इज्या पूज्या—पा० २ पु० ।
(५) ब्रह्मचारिणी—पा० २ पु० ।

जयन्ती करुणा कुहुः । मनस्विनी देवमाता(१) यशस्या ब्रह्मचारिणो(२) ॥ ८७ ॥ सिद्धिदा बुद्धिदा(३) बृद्धिः सर्वाद्या सर्वदायिनी । अधाररूपिणी ध्येया मूलाधारनिवासनी ॥ ८८ ॥ आज्ञा प्रज्ञा पूर्णमनाश्चन्द्रमुख्यनुकूलिनी । वावदूका निम्ननाभिः सत्यसन्धा दृढव्रता ॥ ८९ ॥ आन्वीक्षिकी दण्डनीतिः त्रयी त्रिदिवसुन्दरी । ज्वलिनी ज्वालिनी शैलतनया विन्ध्यवासिनी ॥ ९० ॥ प्रत्यया खेचरी धैर्या तुरीया विमला तुरा । प्रगल्भा वारुणी च्छाया वसिनी विस्फुलिङ्गिनी ॥ ९१ ॥ भुक्तिसिद्धिः सदाप्राप्तिः प्राकाम्या महिमाणिमा । इच्छासिद्धिर्वशित्वा च ईशित्वा घनवासिनी ॥ ९२ ॥ लघिमा चैव गायत्री सावित्री भुवनेश्वरी । मनोहरा चिता दिव्या देवदारा(४) मनोरमा ॥ ९३ ॥ पिङ्गला कपिला जिह्वा रसज्ञा रसिका रसा । सुषुम्नेडा योगवती गान्धारी नरकान्तिका ॥ ९४ ॥ पाञ्चाली रुक्मिणी राधा राध्या भीमा च राधिका । अमृता तुलसी वृन्दा कैटभी कपटेश्वरी ॥ ९५ ॥ उग्रचण्डेश्वरी वीरजननी वीरसुन्दरी । उग्रतारा यशोदाख्या देवकी देवमा-

---

(१) वेदमाता—पा० २ पु० । (२) वादिनी—पा० २ पु० ।
(३) ऋद्धिदा वृद्धिदा—पा० २ पु० । (४) देव्युदारा—पा० २ पु० ।

निता ॥ ९६ ॥ निरञ्जनार्च्चिता देवी(१) क्रोधिनी कुलदायिका(२)। कुलवागीश्वरी ज्वाला मातृका द्राविणी द्रवा ॥ ९७ ॥ योगेश्वरी महामारी भ्रामरी विन्दुरूपिणी। दूती प्राणेश्वरी गुप्ता वहुला डामरुप्रभा ॥ ९८ ॥ कुब्जिका ज्ञानिनी ज्येष्ठा प्रक्रटाकृतिः(३)। द्राविणी गोपिनी माया कामराजेश्वरी(४) क्रिया ॥९९॥ शाकम्भरी कोकनदा मुषलास्रा तिलोत्तमा। अमेया विक्रमा क्रूरा सम्पच्छीला त्रिविक्रमा(५) ॥ १०० ॥ स्वस्ति(६)र्हव्यवहा प्रीतिरुष्मा धूम्रार्च्चिरङ्गदा। तपिनी तापिनी विश्वा भोगदा भोगधारिणी(७) ॥ १ ॥ त्रिखण्डा बोधिनी वश्या सकला शब्दरूपिणी। [बीजरूपा महामुद्रा वशिनी योगरूपिणी](८) ॥ २ ॥ अनङ्गकुसुमानङ्गमेखलानङ्गरूपिणी। अनङ्गमदनानङ्गरेखानङ्गाङ्कुशेश्वरी ॥ ३॥ अनङ्गमालिनी कामेश्वरी सर्वार्थसाधिका। सर्वमन्त्रमयी मोहिन्यरूपानङ्गरूपिणी(९) ॥ ४ ॥ वज्रेश्वरी च

---

(१) चित्रदेवी—पा॰ २ पु॰। (२) दीपिका—पा॰ २ पु।

(३) तिथिः—पा॰ २ पु॰। (४) कामा कामराजेश्वरी—पा॰ २ पु॰।

(५) च्छीलातिविक्रमा—पा॰ २ पु॰। (६) सुश्री—पा॰ २ पु॰।

(७) धारिणी धरा—पा॰ २ पु॰।

(८) [ ] एतच्चिह्नमध्यस्थः पाठो नास्ति द्वितीयपुस्तके।

(९) मोहिन्यरुणानङ्गरूपिणी—पा॰ २ पु॰।

जयिनी सर्वदुःखक्षयङ्करी। षडङ्गयुवती योमयुक्ता ज्वालांशुमालिनी ॥ ५ ॥ दुराशया दुराधारा दुर्जया दुर्गरूपिणी। दुरन्ता दुष्कृतिहरा दुर्ध्येया दुरतिक्रमा ॥ ६ ॥ हंसेश्वरी त्रिलोकस्था शाकम्भर्यनुकल्पिनी। त्रिकोणनिलया नित्या परमामृतरञ्जिता ॥ ७ ॥ महाविश्वेश्वरी(१) श्वेता भेरुण्डा कुलसुन्दरी। त्वरिता भक्तिसंयुक्ता(२) भक्तवश्या सनातनी ॥ ८ ॥ भक्तानन्दमयी भक्तभाविता भक्तशङ्करी। सर्वसौन्दर्यनिलया सर्वसौभाग्यशालिनी(३) ॥ ९ ॥ सर्वसम्भोगभवना सर्वसौख्यस्वरूपिणी। कुमारीपूजनरता कुमारीव्रतचारिणी ॥१०॥ कुमारीभक्तिसुखिनी(४) कुमारीरूपधारिणी। कुमारीपूजकप्रीता कुमारीप्रीतिदायिनी ॥ ११ ॥ कुमारीसेवकासङ्गा कुमारीसेवकालया। आनन्दभैरवी बाल(५)-भैरवी बटुभैरवी ॥ १२ ॥ श्मशानभैरवी कालभैरवी पुरभैरवी। महाभैरवपत्नी च परमानन्दभैरवी ॥ १३ ॥ सुरानन्दभैरवी च उन्मादानन्दभैरवी(६)। शक्त्यानन्दभैरवी च तथा तरुणभैरवी ॥१४॥ ज्ञाना-

---

(१) विश्वेश्वरी—पा० २ पु०। (२) भक्तसंसक्ता—पा० २ पु०।
(३) दायिनी—पा० २ पु०। (४) सुमुखी—पा० १ पु०।
(५) बाला—पा० २ पु०। (६) उन्मत्तानन्दभैरवी—पा० २ पु०।

नन्दभैरवी च अमृतानन्दभैरवी । महाभयङ्करी तीव्रा तीव्रवेगा तपस्विनी ॥ १५ ॥ त्रिपुरा परमेशानी सुन्दरी पुरसुन्दरी । त्रिपुरेशा पञ्चदशी पञ्चमी पुरवासिनी ॥ १६ ॥ महासप्तदशी चैव षोडशी त्रिपुरेश्वरी । महाङ्कुशस्वरूपा च महाचक्रेश्वरी तथा ॥१७॥ नवचक्रेश्वरी चक्रेश्वरी त्रिपुरमालिनी । [राजराजेश्वरी धीरा महात्रिपुरसुन्दरी](१) ॥ १८ ॥ सिन्दूरपूररुचिरा श्रीमत्त्रिपुरसुन्दरी । सर्वाङ्गसुन्दरी रक्ता रक्तवस्त्रोत्तरायणी ॥१९॥ [जवायावकसिन्दूररक्तचन्दनरूपधृक्](२) । यवायावकसिन्दूररक्तचन्दनधारिणी ॥२०॥ चमरीबालकुटिलनिर्मलश्यामकेशिनी । वज्रमौक्तिकरत्नाढ्यकिरीटमुकुटोज्ज्वला ॥२१॥ रक्तकुण्डलसंयुक्ता स्फुरद्गण्डमनोरमा । कुञ्जरेश्वरकुम्भोत्थमुक्तारञ्जितनासिका ॥ २२ ॥ मुक्ताविद्रुममाणिक्यहाराढ्यस्तनमण्डला । सूर्यकान्तेन्दुकान्ताढ्यस्पर्शाश्मकण्ठभूषणा ॥ २३ ॥ बीजपूरस्फुरद्बीजदन्तपङ्क्तिरनुत्तमा । कामकोदण्डभग्नभ्रूकुटाक्षशरवर्षिणी ॥ २४ ॥ मातङ्गीकुम्भवक्षोजलसत्कोकनदेक्षणा । मनोज्ञशष्कुलीकर्णा हंसीगतिविडम्बिनी ॥

(१) [ ] एतन्मध्यस्थः पाठो नास्ति द्वितीयपुस्तके ।

(२) [ ] एतन्मध्यस्थोऽपि पाठस्तादृशः ।

२५ ॥ पद्मरागाङ्गदद्योतदोश्चतुष्कप्रकाशिनी(१)।
नानामणिपरिस्फुर्जच्छुद्धकाञ्चनकङ्कना ॥ २६ ॥
नागेन्द्रदन्तनिर्माणवलयाञ्चितपाणिनी। अङ्गुरीय-
कभूषाङ्गी विचित्रक्षुद्रघण्टिका ॥ २७ ॥ पाट्टाम्बर-
परोधाना कलन्मञ्जीररञ्जिता। कर्पूरागुरुकस्तूरीकु-
ङ्कुमद्रवलेपिता ॥ २८ ॥ विचित्ररत्नपृथिवी कल्प-
शाखितलस्थिता। रत्नद्वीपस्फुरद्रत्नसिंहासननिवा-
सिनी ॥ २९ ॥ षट्चक्रभेदनकरी परमानन्दरूपिणी।
सहस्रदलपद्मान्तश्चन्द्रमण्डलवर्त्तिनी ॥ ३० ॥ ब्रह्म-
विष्णुशिवक्रीडनानासुखविलासिनी। हरविष्णुविरि-
ञ्चीन्द्रग्रहनायकसेविता ॥ ३१ ॥ आत्मयोनिर्ब्रह्मयो-
निर्जगद्योनिरयोनिजा। भगरूपा भगस्थात्री भगिनी
भगवासिनी ॥ ३२ ॥ भगात्मिका भगाधाररूपिणी
भगमालिनी। लिङ्गाभिध्यायिनी लिङ्गप्रिया लि-
ङ्गनिवासिनी ॥ ३३ ॥ लिङ्गस्था लिङ्गिनी लिङ्गरूपिणी
लिङ्गसुन्दरी। लिङ्गस्था लिङ्गिनी लिङ्गप्रिया लिङ्ग-
स्वरूपिणी ॥ ३४ ॥ शिवा शैवा सुरुद्राणी शिवदा
शिवनादिनी। मातङ्गी भ्रामरी माता मालेव मुञ्ज-
मेखला(२) ॥ ३५ ॥ डाकिनी योगिनी चैव तथोप-

(१) ज्योतिर्दोश्चतुष्कप्रकाशिनी—पा० २ पु०।

(२) मातङ्गिनी श्रीमती च तथैवानङ्गमेखला।—पा० २ पु०।

योगिनी मता । माहेश्वरी वैष्णवी च भ्रामरी शिवरूपिणी(१) ॥ ३६ ॥ वैष्णवी चैव वाराही कौमारी कुलसुन्दरी । अलम्बुषा वेगवती क्रोधरूपा सुमेखला ॥ ३७ ॥ गान्धारी गजजिह्वा च इडा चैव शुभङ्करी । पिङ्गला ब्रह्मदूती(२) च सुषुम्ना चैव गन्धिनी ॥३८॥ लिङ्गस्था(३) चैव लिङ्गेशी त्रिपुरा भैरवी तथा । लिङ्गस्था लिङ्गगीतिश्च लिङ्गगीतिस्तथैव च(४) ॥ ३९ ॥ लिङ्गमाला लिङ्गभवा लिङ्गलिङ्गा च पार्वती । भगवती कौशिकी च प्रेमा(५) चैव प्रियंवदा ॥४०॥ गृध्रीशशिवरूपा च चक्रेशी चक्ररूपधृक्(६) । लिङ्गगीतिमहाप्रीतिर्भगगीतिसदारतिः ॥ ४१ ॥ लिङ्गनामसदानन्दा भगनामसदारतिः । भगनामसदानन्दा लिङ्गनामसदारतिः ॥ ४२ ॥ लिङ्गमालाकण्ठभूषा भगमालाविभूषणा । भगलिङ्गामृतप्रीता भगलिङ्गस्वरूपिणी(७) ॥४३॥ भगलिङ्गस्वरूपा च भगलिङ्गसुखा

(१) विष्णुरूपिणीतिपाठः द्वितीयपुस्तकटिप्पण्याम् ।

(२) ब्रह्मसूत्री—पा० ३ पु० । (३) लिङ्गाख्या—पा० २ पु० ।

(४) लिङ्गगीतिः सुगीतिश्च लिङ्गस्था लिङ्गरूपधृक्—पा० ३ पु० ।

(५) पूषा—पा० ३ पु० ।

(६) गृध्ररूपा च चक्रेशी चक्ररूपा च चक्रधृक्—पा० ३ पु ।

(७) भगलिङ्गामृतात्मिका—पा० ३ पु० ।

वहा। स्वयम्भूकुसुमप्रीता स्वयम्भूकुसुमार्च्चिता॥४४॥ स्वयम्भूकुसुमप्राणा स्वयम्भूकुसुमोत्थिता। स्वयम्भूकुसुमस्नाता स्वयम्भूकुसुमार्पिता(१) ॥४५॥ स्वयम्भूपुष्पघटिता स्वयम्भूपुष्पधारिणी। स्वयम्भूपुष्पतिलका स्वयम्भूपुष्पचर्च्चिता ॥४६॥ स्वयम्भूपुष्पनिरता स्वयम्भूकुसुमग्रहा। स्वयम्भूपुष्पयज्ञेशी स्वयम्भूकुसुमात्मिका ॥४७॥ स्वयम्भूपुष्पनिलया(२) स्वयम्भूकुसुमप्रिया। स्वयम्भूकुसुमादानलालसोन्मत्तमानसा॥४८॥ स्वयम्भूकुसुमानन्दलहरीस्निग्धदेहिनी। स्वयम्भूकुसुमाधारा स्वयम्भूकुसुमाकुला॥४९॥ स्वयम्भूपुष्पनिलया स्वयम्भूपुष्पवासिनी। स्वयम्भूकुसुमस्निग्धा स्वयम्भूकुसुमोत्सवा(३) ॥५०॥ स्वयम्भूपुष्पकरिणी स्वयम्भूपुष्पमालिका(४)। स्वयम्भूकुसुमन्यासा(५) स्वयम्भूकुसुमप्रभा ॥ ५१ ॥ स्वयम्भूकुसुमज्ञाना स्वयम्भूकुसुमव्रता। स्वयम्भूकुसुमध्याना स्वयम्भूपुष्पभोगिनी ॥ ५२ ॥ स्वयम्भूकुसुमोल्लासा स्वयम्भूपुष्पवर्षिणी। स्वयम्भूकुसुमोत्साहा स्वयम्भूपुष्परूपिणी ॥ ५३ ॥ स्वयम्भूकुसुमोन्मादा स्वयम्भूपुष्पसुन्दरी।

(१) स्वयम्भूपुष्पतर्पिता—पा० ३ पु०। (२) निचिता—पा० ३ पु० ॥
(३) कुसुमोत्सुका—पा० ३ पु०। (४) पालिका—पा० ३ पु०।
(५) प्रज्ञा—पा० ३ पु०।

स्वयम्भूकुसुमाराध्या स्वयम्भूकुसुमोद्भवा ॥ ५४ ॥
स्वयम्भूकुसुमव्यग्रा स्वयम्भूपुष्पपूर्णिता । स्वयम्भू-
पूजकप्रज्ञा स्वयम्भूहोतृमातृका ॥ ५५ ॥ स्वयम्भू-
दातृरक्षित्री स्वयम्भूभक्तिभाविता । स्वयम्भूपूजक-
ग्राह्या स्वयम्भूपूजकप्रिया ॥ ५६ ॥ स्वयम्भूवन्दका-
धारा स्वयम्भूनिन्दकान्तका । स्वयम्भूप्रदसर्वस्वा
स्वयम्भूप्रदपुत्रिणी ॥ ५७ ॥ स्वयम्भूप्रदसाम्राज्या
स्वयम्भूभोगभोगिनी(१) । सर्वकालोद्भवप्रीता सर्व-
कालोद्भवात्मिका ॥ ५८ ॥ सर्वकालोद्भवोद्भावा
सर्वकालोद्भवोद्भवा । कुण्डपुष्पसदाप्रीतिर्गोलपुष्प-
सदारतिः ॥ ५९ ॥ कुण्डगोलोद्भवप्रीता कुण्डगोलो-
द्भवात्मिका । स्वयम्भूधारिका धात्री पावनीलोकपाव-
नी ॥ ६० ॥ कीर्तिर्यशस्विनी मेधा विमेधा शुक्रसु-
न्दरी । सुखदा मोक्षदा मोक्षा मोक्षदात्मप्रकाशिनी
॥ ६१ ॥ शुक्राधारा शुक्ररूपा शुक्रसिन्धुनिवासिनी ।
शुक्रालया शुक्रभोगा शुक्रपूजासदारतिः ॥६२॥ शु-
क्रपूज्या शुक्रहोमसन्तुष्टा शुक्रवत्सला । शुक्रमूर्तिः
शुक्रकरी शुक्रपूजकपुत्रिका ॥६३॥ शुक्रस्था शुक्रि-
णी शुक्रसंस्पृहा शुक्रसुन्दरी । शुक्रस्नाता शुक्रदेहा
शुक्रनिष्ठातिशुक्रिणी ॥ ६४ ॥ महाशुक्रा शुक्रभवा

(१) अत्राग्रे च प्रतिपुस्तके पाठभेदा गौरवभयात् परित्यक्ताः ।

शुक्रवृष्टिविधायिनी। शुक्राभिधेया शुक्रार्हा शुक्रन-
न्दकनन्दिता ॥ ६५ ॥ शुक्रानन्दकरी शुक्रसदानन्द-
विधायिनी। शुक्रोत्सवा सदाशुक्रपूर्णा शुक्रमनोरमा
॥ ६६ ॥ शुक्रपूजकसर्वस्वा शुक्रनिन्दकनाशिनी।
शुक्रात्मिका शुक्रसम्पच्छुक्राकर्षणकारिणी ॥ ६७ ॥
सारदा साधकप्राणा साधकासक्तमानसा। साधक-
कानन्दसन्तोषा साधकारिविनाशिनी ॥ ६८ ॥ सा-
धकोत्तमसर्वस्वा साधकान्तकरी कृपा। आत्मविद्या
ब्रह्मविद्या परब्रह्मकुटुम्बिनी ॥ ६९ ॥ त्रिकूटस्था
पञ्चकूटा सर्वकूटशरीरिणी। सर्ववर्णमयी वर्णजप-
मालाविधायिनी ॥७०॥ इति श्रीकालिकानाम्नां स-
हस्रं शक्तिभाषितम्। गुह्याद्गुह्यतरं मासा(१)न्महा-
पातकनाशनम् ॥७१॥ पूजाकाले निशीथे च सन्ध्य-
योरुभयोरपि। लभते गाणपत्यं स यः पठेत्साधको-
त्तमः ॥ ७२ ॥ यः पठेत् पाठयेद्वापि शृणोति श्राव-
येदपि। सर्वपापविनिर्मुक्तो स याति कालिकापदम्
॥ ७३ ॥ श्रद्धयाश्रद्धया वापि यः कश्चिन्मानवः
पठेत्। वन्ध्या वा काकवन्ध्या वा मृतवत्सा च या-
ङ्गना ॥७४॥ श्रुत्वा स्तोत्रमिदं पुत्रान् लभते चिर-
जीविनः। यं यं कामयते कामं यः पठेत्स्तोत्रमुत्तमम्

(१) साक्षात्—पा० ३ पु०।

॥ ७५ ॥ देवीवरप्रसादेन तं तं प्राप्नोति नित्यशः । स्वयम्भूकुसुमैः शुक्रैः सुगन्धिकुसुमान्वितैः ॥ ७६ ॥ जवायावकसिन्दूररक्तचन्दनसंयुतैः । मत्स्यमांसादिभिर्वीर मधुभिः साज्यपायसैः ॥ ७७ ॥ भक्तरोपनीतैर्मन्त्रेण साधितैः शक्तिभिः सह । पञ्चोपचारैर्नैवेद्यैर्बलिभिर्बहुशोणितैः ॥ ७८ ॥ धूपदीपैर्महादेवीं पूजयित्वा मनोहरैः । जप्त्वा महामनुं स्तोत्रं पठेद्भक्तिसमन्वितः ॥ ७९ ॥ अनन्यचेताः स्थिरधीर्मुक्तकेशो दिगम्बरः । शवारूढश्चितास्थो वा श्मशानालयमागतः ॥ ८० ॥ शून्यालयगतो वापि शय्यास्थो वा शिवात्मकः । स भवेत् कालिकापुत्र इतिख्यातिमुपागतः ॥ ८१ ॥ सर्वविद्यावतां श्रेष्ठो धनेनैव धनाधिपः । वायुतुल्यबलो लोके दुर्जयः शत्रुमर्द्दनः ॥ ८२ ॥ सर्वसङ्कटमुत्तीर्णः सर्वसिद्धिसमन्वितः । मधुमत्या स्वयं देव्या सेव्यमानः स्मरोपमः ॥ ७३ ॥ महेश इव योगीन्द्रः सर्वसत्त्वपुरस्कृतः । कामिनीकामरूपो ऽसौ सर्वाकर्षणकारकः ॥ ८४ ॥ जलसूर्येन्दुवायूनां स्तम्भको राजवल्लभः । यशस्वी सत्कविर्धीमान् सन्मन्त्री कोकिलस्वरः ॥८५॥ बहुपुत्री गजाश्वानामीश्वरो धार्मिकः कृती । मार्कण्डेय इवायुष्मान् जरापलितवर्जितः ॥ ८६ ॥ नवयौवनयुक्तः

स्यादपि वर्षसहस्रभाक् । बहु किं कथ्यते तस्य पठतः स्तवमुत्तमम् ॥८७॥ न किञ्चित् दुर्ल्लभं लोके यद्यन्मनसि कल्पितम् । ब्रह्महिंसा सुरापानं स्तेयं गुर्वङ्गनागमः ॥८८॥ सर्वमाशु तरन्त्येव स्तवस्यास्य प्रसादतः । रजस्वलाभगं पश्यन् जप्त्वा कालीमहामनुम् ॥ ८९ ॥ स्तवेनानेन संस्तुत्य साधकः किं न साधयेत् । परदारपरो वापि मनुं जप्त्वा पठेत् स्तवम् ॥ ९० ॥ कुबेर इव वित्ताढ्यो जायते मदनोपमः । अष्टोत्तरशतं जप्त्वा योनिमामन्त्र्य मन्त्रवित् ॥ ९१ ॥ सङ्क्रम्य पठनादस्य सर्वविदेश्वरो भवेत् । दिगम्बरो मुक्तकेशः शय्यास्थो मैथुनी नरः ॥ ९२ ॥ जपन् स्तुत्वा महाकालीं खेचरो जायतेऽचिरात् । यदि योषिन्नसंसर्गस्तदा रेतः प्रयत्नतः ॥ ९३ ॥ समुत्सार्य्य ततो जाप्यं तेन स्युः सर्वसिद्धयः । शुक्रोत्सारणकाले च जपपूजापरायणः ॥ ९४ ॥ श्मशानकालिकां स्तुत्वा वाणीवत्सत्कविर्भवेत् । आलोकयंश्चिन्तयित्वा विवस्त्रां परयोषितम् ॥ ९५ ॥ जप्त्वा स्तुत्वा महाकालीं खेचरो जायतेऽचिरात् । सुरतेषु मनुं जप्त्वा स्तुत्वा भगवतीं शिवाम् ॥९६॥ सर्वपापैः परित्यक्तो मानवः स्याच्छुकोपमः । कुहूपूर्णेन्दुसङ्क्रान्तिचतुर्दश्यष्टमीषु च ॥ ९७ ॥ नवम्यां

मङ्गलदिने पठेत्स्तोत्रं सुसाधकः । भौमावास्यानि-
शीथे च चतुष्पथगतो नरः ॥ १८ ॥ मासभक्तवलिं
दद्यात्सदुग्धमीनशोणितम् । अष्टोत्तरशतं जप्त्वा
पठेन्नामसहस्रकम ॥ १९ ॥ सुदर्शनो भवेदाशु देव-
गन्धर्वसेवितः । येन केन प्रकारेण कालीभक्तिपरा-
यणः ॥ २०० ॥ स्तम्भयेदखिलान् लोकान् राजा-
नमपि मोहयेत् । आकर्षयेद्देवकन्यां वशयेदपि के-
शवम् ॥ १ ॥ मारयेदखिलान्दुष्टानुच्चाटयति शात्र-
वान् । नरमार्जारमाहिषच्छागमूषकशोणितैः ॥ २ ॥
सास्थिमांसैः समधुभिः सामृतैर्दुग्धपायसैः । योनि-
क्षालिततोयेन भगलिङ्गामृतेन च ॥ ३ ॥ शुक्रैः
पूजाजपान्ते च कालीं सन्तर्प्य साधकः । सहस्रनाम-
भिर्दिव्यैः स्तौति भक्तिपरायणः ॥ ४ ॥ मातेव का-
लिका तस्य सर्वत्र हितकारिणी । परनिन्दापरद्रोह-
परवादपराय च ॥ ५ ॥ खलाय परतन्त्राय भ्रष्टाया-
साधकाय च । शिवाभक्ताय दुष्टाय दूषकाय दुरा-
त्मने ॥ ६ ॥ हरिभक्तिविहीनाय सुरास्त्रीनिन्दकाय
च । न स्तवं दर्शयेद्दिव्यं सन्दर्श्य शिवहा भवेत् ॥
७ ॥ कुलीनाय महेशाय दुर्गाभक्तपराय च ।
वैष्णवाय विशुद्धाय भक्तियुक्ताय मन्त्रिणे ॥ ८ ॥
अद्वैतानन्दरूपाय कुलपूजारताय च । दद्यात्स्तोत्रं

महाकाल्याः साधकाय तदाज्ञया ॥ ९ ॥ गुरुविष्णु-
महेशानामभेदेन महेश्वरीम् । समग्रां भावयेन्मन्त्री
महेशो नात्र संशयः ॥ १० ॥ स शाक्तः शिवभक्त-
श्च स एव वैष्णवोत्तमः । सम्पूज्य स्तौति यः कालीम-
द्वैतभावमावहन् ॥११॥ देव्यानन्देन सानन्दो देवी-
भक्त्यैव भक्तिमान् । स एव धन्यो यस्यार्थे महेशो
व्यग्रमानसः ॥ १२ ॥ कामयित्वा यथाकामं स्तवमे-
नमुदीरयेत् । सर्वरोगैः परित्यक्तो जायते मदनोप-
मः ॥१३॥ चक्रं वा स्तवमेनं वा धारयेदङ्गसङ्गतम् ।
विलिख्य विधिवत्साधुः स एव कालिकामनुम् ॥
१४ ॥ देव्यै निवेदितं यद्यत्तत्तत्सम्भक्षयेन्नरः ।
दिव्यदेहधरो भूत्वा देव्याः पार्श्वचरो भवेत् ॥ १५ ॥
नैवेद्यनिन्दकं दृष्ट्वा नृत्यन्ति योगिनीगणाः । रक्त-
पानोद्यताः सर्वे मांसास्थिचर्वणोद्यताः ॥ १६ ॥
तस्मान्निवेदितं देव्यै दृष्ट्वा श्रुत्वा च मानवः । न
निन्देन्मनसा वाचा सर्वव्याधिपराङ्मुखः ॥ १७ ॥
आत्मानं कालिकात्मानं भावयन्स्तौति मानवः ।
शिवोपमं गुरुं ध्यात्वा स एव श्रीसदाशिवः ॥१८॥
यस्यालये तिष्ठति नूनमेतत्स्तोत्रं भवान्या लिखितं
विधिज्ञैः । गोरोचनारक्तककुङ्कुमाक्तकर्पूरसिन्दूर-
मधुद्रवेण ॥१९॥ न तत्र चौरस्य भयं न दस्योर्मनोरथो

नापि न वह्निभीतिः । उत्पातवायोरपि नात्र शङ्का लक्ष्मीः स्वयं तत्र वसेदलोला ॥ २० ॥ स्तोत्रं पठन्ने तदनन्तपुण्यं कालीपदाम्भोजपरो मुनुष्यः । विधानपूजाफलमेव सम्यक् प्राप्नोति सम्पूर्णमनोरथोऽसौ ॥ २२१ ॥

इतिश्रीकालीकुलसर्वस्वे शिवपरशुरामसंवादे
महाकालीसहस्रनामस्तोत्रं सम्पूर्णम् ॥

अथ महाकालीस्तोत्रम् ।

कर्पूरं मध्यमान्त्यस्वरपरिरहितं सेन्दुरामाक्षियुक्तं बीजं ते मातरेतत्त्रिपुरहरवधु त्रिःकृतं ये जपन्ति । तेषां गद्यानि पद्यानि च मुखकुहरादुल्लसन्त्येव वाचः स्वच्छन्दं ध्वान्तधाराधररुचिरुचिरे सर्वसिद्धिं गतानाम् ॥ १ ॥

कर्पूरमित्यादि ॥ कर्पूरमितिशब्दस्य मध्यपदेन मध्यस्थव्यञ्जनवर्णो रेफयुक्तः पकारः अन्त्यपदेनानुस्वारः स्वरपदेनाकारद्वयमूकारश्च तद्रहितं क्रइति कर्पूरं कथम्भूतं सेन्दुवामाक्षियुक्तं इन्दुपदेन विन्दुस्तेन सह वामाक्षि दीर्घईकारस्तद्युक्तं तथा च क्रीं इति बीजं त्रिःकृतं त्रिधा कृत्वा ये जपन्ति तेषां मुखकुहरात् सच्छन्दं अनायासेन गद्यानि पद्यानि च उल्लसन्ति एवकारो निश्चयार्थः हे ध्वान्तधाराधररुचिरुचिरे अतिशयकृष्णवर्णस्य मेघस्य या रुचिः तस्या इव रुचिरे मनोज्ञे अतिशयकृष्णवर्णे इत्यर्थः तेषां कथम्भूतानां सर्व-

ईशानः सेन्दुवामश्रवणपरिगतो बीजमन्यन्म-हेशि द्वन्द्वं ते मन्दचेता यदि जपति जनो वारमेकं कदाचित्। जित्वा वाचामधीशं धनदमपि चिरं मोहयन्नम्बुजाक्षीवृन्दं चन्द्रार्द्धचूड़े प्रभवति स महाघोर-वाणावतंसे ॥ २ ॥

ईशो वैश्वानरस्थः शशधरविलसद्वामनेत्रेण युक्तो बीजं ते द्वन्द्वमन्यद्विगलितचिकुरे कालिके ये जपन्ति। द्वेष्टारं घ्नन्ति ते च त्रिभुवनमपि ते वश्य-

सिद्धिं गतानाम्। अनिमाद्यष्टसिद्धिं प्राप्तानां तथाचात्यन्तैश्वर्य्य-पूर्व्वकं कविर्भवतीत्यर्थः त्रिपुरहरवधिवति सम्बोधनम् ॥ १ ॥

ईशानइत्यादि ॥ ईशानो हकार इन्दुर्विन्दुः वामश्रवणं ऊकारः तद्युक्तः तथा च हूं इतिबीजमस्यार्थः हे महेशि ते तव अन्यद्वीजमेतद्द्वन्द्वं मन्दचेता जनो वारमेकं यदि कदाचिज्जपति तदा वाचामीशं वृहस्पतिं जित्वा धनदं कुबेरमपि जित्वा अम्बुजाक्षी-वृन्दं स्त्रीसमूहं मोहयन् प्रभवति प्रभुर्भवति हि निश्चितम्। चन्द्रार्द्ध-चूड़े इति सम्बोधनम्। महाघोरवाणावतंसे अत्यन्तभयानकौ वाणौ अवतंसौ कर्णभूषे यस्याः ॥ २ ॥

ईशइत्यादि ॥ ईशो हकारः वैश्वानरो रेफस्तत्र स्थः पुनः किम्भूतः शशधरविलसद्वामनेत्रेण युक्तः शशधरो विन्दुस्तेन विल-सद्वामनेत्रं ईकारः तद्युक्तस्तथा च ह्रीं इतिबीजं द्वन्द्वं द्विवारं ये जपन्ति ते जना द्वेष्टारं शत्रुं घ्नन्ति एवं ते जनास्त्रिभुवनमपि वश्यभावं नयन्ति इत्यन्वयः। विगलितचिकुरे इति स्खलितकेशपाशइति सम्बोधनम्। सृक्कद्वन्द्वास्रधाराद्वयधरवदने सृक्कद्वन्द्वमोष्ठप्रान्तदेशौ

भावं नयन्ति सृक्कद्वन्द्वास्रधाराद्वयधरवदने दक्षिणे कालिकेति ॥ ३ ॥

ऊर्द्ध्वे वामे कृपाणं करकमलतले छिन्नमुण्डं तथाधः सव्ये चाभीर्वरं च त्रिजगदघहरे दक्षिणे कालिकेति । जप्त्वैतन्नाम ये वा तव मनुविभवं भावयन्त्येवमम्ब तेषामष्टौ करस्थाः प्रकटितवदने सिद्धयस्त्र्यम्बकस्य ॥ ४ ॥

वर्गाद्यं वह्निसंस्थं रतिविधुवलितं तत्त्रयं कूर्च्च-युग्मं लज्जायुग्मं च पश्चात् स्मितमुखि तदधष्ठद्वयं

तदवच्छिन्नं अस्रधाराद्वयं रक्तधाराद्वयं तद्धरतीति ईदृशं वदनं यस्या इतिसम्बोधनम् । पुनः कालिकेइति सम्बोधनं स्तवकर्त्तुर्हर्षसू-चकम् । घ्नन्तीत्यत्र निहन्तीति पाठः पुस्तकान्तरे ऽस्ति तदा महा-कालप्रणीतत्वान्न दोषः ॥ ३ ॥

ऊर्द्ध्वे इत्यादि ॥ हे त्रिजगदघहरे तव ऊर्द्ध्वे वामे वामहस्ते कृपाणं खड्गं वामाधःकरकमलतले च्छिन्नमुण्डं सव्ये दक्षिणहस्त-द्वये अभीरभयं वरं च एतद्रूपध्यानपूर्व्वकं दक्षिणे कालिके इतिनाम जप्त्वा तवैतन्मन्त्रप्रतिपाद्यं दक्षिणकालिकात्मकं तेजो ये भावयन्ति हे अम्ब तेषां जनानां त्र्यम्बकस्य शिवस्याष्टौ सिद्धयः अणिमाद्याः करस्था भवन्तीत्यर्थः प्रकटितवदन इति विस्तारितवदनइत्यर्थः ॥४॥

वर्गाद्यमित्यादि ॥ वर्गाद्यं ककारः वह्निसंस्थं रेफानु-योगिकं विधुरनुस्वारः रतिरीकारः वलितं युक्तं तथा च क्रीं इति बीजं ललितमित्यपि पाठः तत्त्रयं क्रीं इतिबीजस्य त्रयं पश्चात् कूर्च्च-

योजयित्वा। मातर्ये ये जपन्ति स्मरहरमहिले भावयन्तः स्वरूपं ते लक्ष्मीलास्यलीलाकमलदलदृशः कामरूपा भवन्ति ॥ ५ ॥

प्रत्येकं वा द्वयं वा त्रयमपि च परं बीजमत्यन्तगुह्यं त्वन्नाम्ना योजयित्वा सकलमपि सदा भावयन्तो जपन्ति। तेषां नेत्रारविन्दे विहरति कमला वक्त्रशुभ्रांशुविम्बे वाग्देवी देवि मुण्डस्रगतिशयलसत्कण्ठि पीनस्तनाढ्ये ॥ ६ ॥

युग्मं हूँकारद्वयं पश्चात् लज्जाद्वन्द्वं ह्रींकारद्वयं तदधस्तदन्ते ठद्वयं स्वाहा हे मातः तव स्वरूपं त्वदीयाकारं भावयन्तो ये ये जना योजयित्वा जपन्ति ते लक्ष्मीलास्यलीलाकमलदलदृशो भवन्ति लक्ष्म्या नृत्यस्थानं यत्कमलदलं अस्येव दृष्टिर्येषां तथा च तेषां दृष्टिपातमात्रेणान्येषां सम्पत्तिर्भवतीति फलितार्थः। ते कथम्भूताः कामरूपाः सर्व्वकर्म्मसु निपुणाः इत्यर्थः स्मितमुखि ईषद्धास्यमुखि स्मरहरमहिले इति शिवपत्नीत्यर्थः ॥ ५ ॥

प्रत्येकमित्यादि ॥ हे देवि प्रत्येकं प्रागुक्तसप्तबीजान्यतमं वा निजबीजत्रयं वा द्वयं हूँकारद्वयं वा सकलमपि बीजसप्तकमपि वा त्वन्नाम्ना दक्षिणे कालिकेइतिनाम्ना योजयित्वा ये जनास्तदीयाकारं भावयन्तः सदा जपन्ति तेषां नेत्रारविन्दे कमला लक्ष्मीर्विहरति वक्त्रशुभ्रांशुविम्बे चन्द्रमण्डलवन्मुखे वाग्देवी सरस्वती विहरति कथम्भूते मुण्डस्रगतिशयलसत्कण्ठि मुण्डमालया अतिशयलसन् कण्ठो यस्याः सा पुनः किम्भूते पीनस्तनाढ्ये ॥ ६ ॥

गतासूनां वाहुप्रकरकृतकाञ्चीपरिलसन्नितम्बां दिग्वस्त्रां त्रिभुवनविधात्रीं त्रिनयनाम् । श्मशानस्थे तल्पे शवहृदि महाकालसुरतप्रसक्तां त्वां ध्यायन् जननि जड़चेता अपि कविः ॥ ७ ॥

शिवाभिर्घोराभिः शवनिवहमुण्डास्थिनिकरैः परं सङ्कीर्णायां प्रकटितचितायां हरवधूम् । प्रविष्टां सन्तुष्टामुपरि सुरतेनातियुवतीं सदा त्वां ध्यायन्ति क्वचिदपि न तेषां परिभवः ॥ ८ ॥

वदामस्ते किं वा जननि वयमुच्चैर्जड़धियो न

गतासूनामित्यादि ॥ हे जननि त्वां ध्यायन् जड़चेता अपि कविर्भवति त्वां किम्भूतां गतासूनां वाहुप्रकरकृतकाञ्चीपरिलसन्नितम्बां मृतशरीरिणां हस्तसमूहैः कृता या काञ्ची क्षुद्रघण्टिका तया परिलसन्नितम्बां पुनः कथम्भूतां दिग्वस्त्रां त्रिभुवनविधात्रीं सृष्टिकर्त्रीं त्रिनयनां पुनः किम्भूतां श्माशनस्थे तल्पे शय्यायां शवहृदि महाकालसुरतप्रसक्तां प्रयुक्तां महाकालेन सह रतिक्रीड़ासक्तामित्यर्थ ॥ ७ ॥

शिवाभिरित्यादि ॥ हे देवि प्रकटितचितायां प्रज्वलितचितायां प्रविष्टां त्वां हरवधूं ये जनाः सदा ध्यायन्ति तेषां न क्वचिदपि परिभवः । चितायां किम्भूतायां घोराभिर्भयजनिकाभिः शिवाभिः सङ्कीर्णायाम् । एवं शवसमूहमुण्डास्थिनिकरैः समूहैर्विशिष्टायां परं प्रकृष्टं यथा स्यादिति क्रियाविशेषणम् । त्वां किम्भूतां अतियुवतीमुपरिसुरतेनातिसन्तुष्टां विपरीतरतासक्तामित्यर्थः ॥ ८ ॥

वदामस्तइत्यादि ॥ हे जननि तव परमं तत्त्वं धाता ब्रह्मा न

धाता नापीशो हरिरपि न ते वेत्ति परमम् । तथापि त्वद्भक्तिर्मुखरयति चास्माकमसिते तदेतत् क्षन्तव्यं न खलु पशुरोषः समुचितः ॥ ९ ॥

समन्तादापीनस्तनजघनधृग्यौवनवतीरतासक्तो नक्तं यदि जपति भक्तस्तव मनुम् । विवासास्त्वां ध्यायन् गलितचिकुरस्तस्य वशगाः समस्ताः सिद्धौघा भुवि चिरतरं जीवति कविः ॥ १० ॥

समाः स्वस्थीभूतां जपति विपरीतां यदि सदा विचिन्त्य त्वां ध्यायन्नतिशयमहाकालसुरताम् । तदा

वेत्ति ईशोऽपि हरिरपि नेति । उच्चैर्जडधियः अत्यन्तमन्दबुद्धयः वयं किं वदामः किं वर्णयामः तथापि त्वद्भक्तिस्त्वयि भक्तिः अस्माकं मुखरयति शब्दायते । हे असिते तत्तन्मुखरताजन्यमपराधादिकं क्षन्तव्यं न खलु पशुरोषः समुचितः अज्ञानिविषये क्रोधो ऽयुक्त एवेत्यर्थः ॥ ९ ॥

समन्तादापीनेत्यादि ॥ हे देवि यो भक्तो नक्तं विवासाः सन् त्वां ध्यायन् तव मनुं मन्त्रं यदि जपति तदा समस्ताः सिद्धौघाः अणिमाद्यष्टसिद्धयस्तस्य वशगा भवन्ति इत्यन्वयः । एवं स कविः सन् भुवि पृथिव्यां चिरतरं कालं व्याप्य तिष्ठति स कथम्भूतः समन्तादापीनस्तनजघनधृग्यौवनवतीरतासक्तः गलितचिकुरो मुक्तकेशः ॥ १० ॥

समाः स्वस्थीभूतामित्यादि ॥ हे हरवधु यो जनः समाः सम्वत्सरं वाप्य सदा नित्यं त्वा ध्यायन् यदि जपति तस्य विषया महासिद्धिनिवहाः अणिमाद्यष्टसिद्धयः कराम्भोजे वश्या भवन्ति

तस्य क्षौणीतलविहरमाणस्य विदुषः करांम्भोजे वश्या हरवधु महासिद्धिनिवहाः ॥ ११ ॥

प्रसूते संसारं जननि जगतीं पालयति यत् समस्तं क्षित्यादि प्रलयसमये संहरति च । अतस्त्वं धातापि त्रिभुवनपतिः श्रीपतिरहो महेशोऽपि प्रायः सकलमपि किं स्तौमि भवतीम् ॥ १२ ॥

अनेके सेवन्ते भवदधिकगीर्व्वाणनिवहान् विमूढास्ते मातः किमपि न हि जानन्ति परमम् । समाराध्यामाद्यां हरिहरविरिञ्चादिविबुधैः प्रपन्नोऽस्मि स्वैरं रतिरसमहानन्दनिरताम् ॥ १३ ॥

तस्य किम्भूतस्य क्षौणीतलविहरमाणस्य राज्ञ इत्यर्थः । त्वां कथम्भूतां स्वस्थीभूतां चाञ्चल्यरहितां विपरीतां विपरीतरतासक्तां विचिन्त्य इतिमन्त्रं जपतीत्यर्थः ॥ ११ ॥

प्रसूते संसारमित्यादि ॥ हे जननि भवती संसारं प्रसूते अतः कारणात् त्वं धाता ब्रह्मा जगतीं पालयति अतस्त्रिभुवनपतिः श्रीपतिर्विष्णुः समस्तं क्षित्यादि प्रलयकाले संहरति अतो महेशः चकारः समुच्चयार्थः अहो आश्चर्य्यं सकलमपि इन्द्रादयोऽपि अपिकार एवकारार्थः अतो भवतीं किं स्तौमि वर्णनयोग्या भवाम इति ॥ १२ ॥

अनेके इत्यादि ॥ हे मातर्भवदधिकगीर्व्वाणनिवहान् त्वदधिकदेवतासमूहान् अनेके सेवन्ते ते किमपि किञ्चिदपि परमं तत्त्वं न हि जानन्ति अत एव विमूढा अतिदुर्बुद्धयः किन्तु हरिहरविरिञ्च्यादिविबुधैर्देवैः समाराध्यां त्वामाद्यामाद्यप्रकृतिमहं प्रपन्नोऽस्मि शरणं

धरित्री कीलालं शुचिरपि समीरोऽपि गगणं त्वमेका कल्यानी गिरिशरमणी कालि सकलम् । स्तुतिः का ते मातर्निजकरुणया मामगतिकं प्रसन्ना त्वं भूया भवमनु न भूयान्मम जनुः ॥ १४ ॥

श्मशानस्थः सुस्थो गलितचिकुरो दिक्पटधरः सहस्रं त्वर्काणां निजगलितवीर्येण कुसुमम् । जपं-स्त्वत्प्रत्येकं मनुमपि तव ध्याननिरतो महाकालि स्वैरं स भवति धरित्रीपरिवृढः ॥ १५ ॥

गृहे सम्मार्जन्या परिगलितबीजं हि चिकुरं स

गतोऽस्मि त्वां किम्भूतां स्वैरं स्वच्छन्दं यथा स्यात्तथा रतिरसमदानन्दनिरतां रतिक्रीड़ायुक्तामित्यर्थः ॥ १३ ॥

धरित्रीत्यादि ॥ हे कालि त्वं धरित्री पृथिवी एवं कीलालं जलं शुचिरग्निः समीरो वायुः गगणमाकाशं कथम्भूता गिरिशरमणी शिवपत्नी एका अद्वितीया एवं सकलं हे मातरतः ते तव का स्तुतिः किन्तु अगतिकं मां तव करुणया त्वं प्रसन्ना भूयाः भवं संसारमनु लक्षीकृत्य मम जनुर्न भूयादित्यात्यन्तिकप्रार्थनाविशेषः ॥ १४ ॥

श्मशानस्थ इत्यादि ॥ हे महाकालि यो जनः श्मशानस्थः सन् त्वत्प्रत्येकं मनुं जपन् अर्काणां सहस्रं कुसुमं निजगलितवीर्येण स्वीयशुक्रेण विशिष्टमित्यन्वयः स जनः स्वैरं धरित्रीपरिवृढो राजा भवतीत्यर्थः स कथम्भूतः सुस्थ एकचित्तः विगलितचिकुरो मुक्तकेशः दिक्पटधरो दिगम्बरः पुनः कथम्भूतः तव ध्याननिरत इति ॥ १५ ॥

गृहे सम्मार्जन्येत्यादि ॥ हे कालि यो जनः कुजदिने

मूलं मध्याह्ने वितरति चितायां कुजदिने। समुच्चार्य प्रेम्णा मनुमपि सकृत् कालि सततं गजारूढो याति क्षितिपरिवृढः सत्कविवरः ॥ १६ ॥

स्वपुष्पैराकीर्णं कुसुमधनुषो मन्दिरमहो पुरो ध्यायन् ध्यायन् जपति परमं वा तव मनुम्। स गन्धर्वश्रेणीपतिरपि कवित्वामृतनदीनदीनः पर्यन्ते परमपदलीनः प्रभवति ॥ १७ ॥

त्रिपञ्चारे पीठे शवशिवहृदि स्मेरवदनां महाकालेनोच्चैर्मदनरसलावण्यनिरताम्। समासक्तो नक्तं

मङ्गलवारे मध्याह्ने समूलं चिकुरं केशपाशमेव सम्मार्जन्या सह परिगलितबीजं स्वीयं शुक्रं एकीकृत्य चितायां मनुं मन्त्रं समुच्चार्य प्रेम्णा भक्त्या सकृदेकवारं यदि वितरति ददाति स मत्तगजारूढो भवति एवं क्षितिपरिवृढो राजा भवति यद्वा चिकुरः कुन्तलं सम्मार्ज्जनी गृहसम्मार्ज्जनी अथ वा सम्मार्ज्जनी वेश्या तया परिगलितबीजं तस्याः शुक्रमित्यर्थः ॥ १६ ॥

स्वपुष्पैरित्यादि ॥ स्वीयऋतुरक्तेन युक्तं कुसुमधनुषो मन्दिरं योनिं पुरः सम्मुखे ध्यायन् भक्तो भक्तियुक्तः सन् परमं मनुं यदि जपतीत्यन्वयः। अहो आश्चर्यं स गन्धर्वश्रेणीपतिः भवति स कथम्भूतः कवित्वामृतनदीनदीनः कवित्वरूपामृतनदीनां मध्ये नदीनः पतिरिव एवं पर्यन्ते मरणकाले परमपदलीनः कालिकातेजसि लीनो भवति ॥ १७ ॥

त्रिपञ्चारइत्यादि ॥ हे जननि त्रिपञ्चारे पीठे पञ्चदशकोणघटितयन्त्रे शवशिवहृदि स्मेरवदनां यो जनो ध्यायेत् स स्मरहरः

स्वयमपि रतानन्दनिरतो जनो यो ध्यायेत् त्वामयि जननि स स्यात् स्मरहरः ॥ १८ ॥

सलोमास्थि स्वैरं पललमपि मार्जारमसिते परं चौष्ट्रं मैषं नरमहिषयोश्छागमपि वा। वलिं ते पूजायामयि वितरतां मर्त्यवसतां सतां सिद्धिः सर्वा प्रतिपदमपूर्वा प्रभवति ॥ १९ ॥

वशी लक्षं मन्त्रं प्रजपति हविष्याशनरतो दिवा मातर्युष्मच्चरणयुगलध्याननिपुनः। परं नक्तं नग्नो निधुवनविनोदेन च मनुं जपेत् लक्षं स स्यात् स्मरहरसमानः क्षितितले ॥ २० ॥

शिवः स्यात् त्वां किम्भूतां महाकालेनोर्द्धं मदनरसलावण्यनिरतां महाकालेन सहात्यन्तरतिक्रीड़ासक्तां जनः कथम्भूतः नक्तं रात्रौ समासक्तः प्रवृत्तः पुनः कथम्भूतः स्वयं रतानन्दनिरतः रतिक्रीड़ायुक्तः ॥ १८ ॥

सलोमास्थीत्यादि ॥ हे असिते तव पूजायां वलिं स्वैरं स्वच्छन्दं वितरतां मर्त्यवसतां नराणां प्रतिपदं प्रतिदिनं अपूर्वा परमोत्कृष्टा सिद्धिः प्रभवति वलिं कथम्भूतं परं प्रकृष्टं पुनः कथम्भूतं मार्जारोष्ट्रमेषनरमहिषच्छागसम्बन्धिनं पललं कथम्भूतं सलोमास्थि ॥१९॥

वशीत्यादि। हे मातः वशी साधकः हविष्याशनरतः सन् दिवा युष्मच्चरणयुगलध्याननिपुनः मन्त्रं लक्षं जपति एवं नक्तं रात्रौ नग्नो दिगम्बरः सन् निधुवनविनोदेन रतिक्रीड़ायुक्तेन परं लक्षं मनुं मन्त्रं यदि जपेत् सम्यक् विधिबोधितक्रमेण स क्षितितले पृथिव्यां स्मरहरसमानः शिवरूप इत्यर्थः ॥ २० ॥

इदं स्तोत्रं मातस्तव मनुसमुद्धारणजनु स्वरूपाख्यं पादाम्बुजयुगलपूजाविधियुतम् । निशार्द्धं वा पूजासमयमथ वा यस्तु पठति प्रलापस्तस्यापि प्रसरति कवित्वामृतरसः ॥ २१ ॥

कुरङ्गाक्षीवृन्दं तमनुसरति(१) प्रेमतरलं वशस्तस्य क्षौणीपतिरपि कुवेरप्रतिनिधिः । रिपुः कारागारं कलयति च तत् केलिकलया चिरञ्जीवन्मुक्तः स भवति भक्तः प्रतिजनुः ॥ २२ ॥

इतिवीरतन्त्रे महाकालोक्तं स्वरूपाख्यं स्तोत्रं समाप्तम् ॥

इदं स्तोत्रमित्यादि ॥ हे मातरिदं स्वरूपाख्यं स्वरूपकथनं स्तोत्रं निशार्द्धं महानिशां एवं पूजासमयं वा अधि लक्षीकृत्य यः पठति तस्य प्रलापः अनर्थकः शब्दस्तद्योगो ऽपि कवित्वामृतरसः सन् प्रसरति मुखान्निर्गतो भवति स्तोत्रं कथम्भूतं तव मनुसमुद्धारणजनु मन्त्रोद्धारणस्योत्पत्तिर्यत्र पुनः कथम्भूतं पादाम्बुजयुगलपूजाविधियुतम् ॥ २१ ॥

कुरङ्गाक्षीत्यादि ॥ पूर्व्वेणान्वयः एवं कुरङ्गाक्षीवृन्दं स्त्रीसमूहं तं जनमनुसरति तस्य पश्चाद्गच्छतीत्यर्थः प्रेमतरलं प्रेम्णा कामरसेन तरलं चञ्चलं यथा स्यात् एवं क्षौणीपतिः राजा तस्य वश्यो भवति स कुवेरप्रतिनिधिः कुवेरतुल्यो रिपुस्तत् प्रसिद्धं कारागारं कलयति प्राप्नोति स केलिकलया सुखेन चिरं चिरकालं व्याप्य जीवन्मुक्तो भवतीत्यर्थः ॥ २२ ॥

इतिस्वरूपाख्यस्तोत्रव्याख्या समाप्ता ॥

---

(१) अनुधावतीति टिप्पणीपाठः ।

श्रीगणेशाय नमः ।

# अथ लक्ष्मीपञ्चाङ्गम् ॥



लक्ष्मीमन्त्रः । वान्तं वह्निसमारूढं वामनेत्रेन्दुसंयुतम् । बीजमेतत् श्रियः प्रोक्तं सर्वकामफलप्रदम् ॥१॥ मन्त्रान्तरम् । वाग्भवं वनिता विष्णोर्माया मकरकेतनः । चतुर्बीजात्मको मन्त्रश्चतुर्वर्गफलप्रदः ॥ २ ॥ मन्त्रान्तरम् । दीर्घाषादि विसर्गान्तो ब्रह्मा भानुर्वसुन्धरा । वान्ते सिन्यै प्रिया वह्नेर्मनुः प्रोक्तो दशाक्षरः ॥ ३ ॥ (नमः कमलवासिन्यै स्वाहा ।) अथ महालक्ष्मीमन्त्रः । वाग्भवं शम्भुवनिता रमा मकरकेतनः । तार्त्तीयं च जगत्पार्श्वो वह्निबीजसमुज्ज्वलः ॥ ४ ॥ अर्घीशाढ्यो भृगुस्त्यैः हृन्मन्त्रो ऽयं द्वादशाक्षरः । महालक्ष्म्याः समुद्दिष्टस्तारादयः सर्वसिद्धिदः ॥ ५ ॥ मन्त्रान्तरम् । शम्भुपत्नी श्रिया रुद्धा कामौ भगवती मही । ब्रह्मादित्यो धरा दीर्घा लक्ष्म्यादिर्भगवान् मरुत् ॥ ६ ॥ प्रसीदयुगलं भूयः श्रीरुद्धा भुवनेश्वरी । महालक्ष्मि नमोऽन्तः स्यात् प्रणवादिरयं मनुः(१) ॥ ७ ॥

---

(१) मही लकारः भगवती एकारवती ब्रह्मा ककारः धरा लकारः दीर्घा आकारयुक्ता लक्ष्म्यादिर्लकारः मरुद्यकारः ।

अथ लक्ष्मीयन्त्रम् । अष्टपत्रं लिखेत् यन्त्रं वहिर्भूविम्बमालिखेत् । मध्ये पुष्पं विनिःक्षिप्य पीठशक्तीः समर्च्चयेत् ॥ पीठशक्तयो यथा निबन्धे । अत्र सम्यग् यजेत् पीठं नवशक्तिसमन्वितम् । विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्त्तिश्च रुन्नतिः ॥ व्युष्टिरुत्कृष्टिः ऋद्धिश्च सम्प्रोक्ता नव शक्तयः । बीजाढ्यमासनं दत्त्वा मूर्त्तिं मूलेन कल्पयेत् । इति ॥

लक्ष्मीपूजापद्धतिः ॥

श्रीभैरव उवाच । शृणु देवि प्रवक्ष्यामि पद्धतिं गद्यरूपिणीम् । श्रीलक्ष्मीनित्यपूजायाः सारात् सारोत्तमोत्तमाम् ॥ तत्रादौ ब्राह्मे मुहूर्त्ते उत्थाय बद्धपद्मासनः स्वशिरःस्थसहस्राराधोमुखकमलकर्णिकान्तर्गतं निजगुरुं श्वेतालङ्कारभूषितं वामे स्वशक्त्या रक्ताम्बरयालिङ्गितं ध्यात्वा मानसोपचारैः सम्पूज्य दण्डवत् प्रणम्य तदाज्ञां गृहीत्वा वहिरागत्य मलमूत्रादि सन्त्यज्य वर्णोक्तं शौचमाचरेत् । तत्र नद्यादौ गत्वा स्वकूर्च्चद्वादशाङ्गुलं कामराजेन दन्तधावनं विधाय वाग्भवेन गण्डूषत्रयं कृत्वा मूलेन त्रिर्मुखं प्रक्षाल्य ओं श्रीं ह्रीं मणिधरि वज्रिणि शिखापरिसरे रक्ष रक्ष ठः ठः फट् स्वाहा इति शिखां बद्ध्वा मूलेन त्रिर्मुखं कामराजेन त्रिः

प्राणायामं मूलेन त्रिर्मुखं प्रक्षाल्य वासांस्याकृष्य मलापकर्षणस्नानं(१) विधाय मन्त्रस्नानं कुर्यात् ॥ ततो मूलेन मृदमादाय जले प्रोक्षयेत् मृत्त्रिभागं मूलेन संशोध्य एकेन भागेन गङ्गे चेत्यादिना तीर्थमावाह्य द्वितीयेन महालक्ष्म्यै विद्महे हरिप्रियायै धीमहि परिवारयुते देवि जले ऽस्मिन् सन्निधिं भव इति देवीमावाह्य कुशमूल्यां जले च यन्त्रं विभाव्य तृतीयेन स्वाङ्गं विलिप्य मूलविद्यामुच्चरंस्त्रिः शिरसः-पादपर्यन्तं स्वाम्पि मज्जे तु तत्र मूलेन षडङ्गं विधाय देवीं ध्यात्वा मूलं दशधा जप्त्वा मूलेन शिरोमार्जनं विधाय ओं ह्रीं हंसः श्रीसूर्याय एष ते ऽर्घो नम इति त्रिरर्घ्यं दत्त्वा जलादुत्थाय वासो ऽन्यत् परिधाय सन्ध्यामारभेत् ॥ मूलेन शिरसि मार्जनं विधाय त्रिराचमेत् ॥ मूलं आत्मतत्त्वं शोधयामि स्वाहा मूलं विद्यातत्त्वं शोधयामि स्वाहा मूलं शिवतत्त्वं शोधयामि स्वाहा(२) प्रणवेन प्राणायामं कृत्वा ऋ-

---

(१) स्नानं सप्तविधं तथा चोक्तम् । मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च । वारुणं मानसं चैव स्नानं सप्तविधं स्मृतम् ॥ आपोहिष्ठादिभिर्मान्त्रं भौमं देहप्रमार्जनम् । आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ॥ यत्तदातपवर्षेण स्नानं दिव्यमिहोच्यते । वारुणं चावगाहः स्यान्मानसं विष्णुचिन्तनम् ॥ इति ।

(२) सन्ध्याप्रयोगे आचमनमधिकृत्याह स्वतन्त्रतन्त्रे आत्मविद्या-

ष्यादिषडङ्गं विधाय वामहस्तेन जलमादाय दक्ष-हस्तेनाच्छाद्य हं यं वं लं रं इति त्रिरभिमन्त्र्य मूलमुच्चरन् गलितोदकविन्दुभिस्तत्त्वमुद्रया मूर्द्ध्नि सप्तधाभ्युक्षणं विधाय शेषजलं दक्षहस्ते गृहीत्वा तेजोरूपं ध्यात्वा ईडयान्तर्नीत्वा पापं प्रक्षाल्य कृष्णरूपं तज्जलं पापरूपं पिङ्गलया विरेच्य पुरःकल्पितवज्रशिलायां फडिति निक्षिपेत्(१) इत्यघमर्षणं कृत्वा मूलगायत्रीं

---

शिवैस्तत्त्वैराचामेत् साधकाग्रणीः वह्निजायां परे दत्त्वा शुद्धेन पाथसा प्रिये ॥ इति तत्र शोधयामीति पदं नास्ति ।

(१) केचित्तु आचमनानन्तरं जले गङ्गे चेत्यादिना तीर्थमावाह्य मूलेन कुशेन त्रिवारं भूमौ जलं क्षिप्त्वा सप्तधा तज्जलेन मूर्द्धानमभिसिञ्चेत् ततः षडङ्गन्यासं कृत्वा वामहस्तेन जलमादायेत्यादि कार्यं कुर्यादित्याहुः । उक्तं च गौतमीये । आचम्य विधिवन्मन्त्री शुचौ देशे च संविशेत् । जले संयोज्य तीर्थानि त्रिवारं मूलमन्त्रतः ॥ क्षिपेत् भूमौ कुशाग्रेण सप्तधा मूर्द्ध्नि सेचयेत् । तन्त्रान्तरे । पुनराचम्य विन्यस्य षडङ्गमपि कर्म्मवित् । वामहस्ते जलं गृह्य गलितोदकविन्दुभिः । सप्तधा प्रोक्षणं कृत्वा मूर्द्ध्नि मन्त्रं समुच्चरन् । अवशिष्टोदकं दक्षहस्ते सङ्गृह्य बुद्धिमान् ॥ ईडयाकृष्य देहान्तःक्षालितं पापसञ्चयम् । कृष्णवर्णं तदुदकं दक्षनाड्या विरेचितम् ॥ दक्षहस्ते तु तन्मन्त्री पापरूपं विचिन्त्य च । पुरतो वज्रपाषाणे निक्षिपेदस्त्रमुच्चरन् ॥ अन्यत्रापि । षडङ्गन्यासमाचम्य वामहस्ते जलं ततः । गृहीत्वा दक्षिणेनैव सम्पुटं कारयेत्ततः ॥ शिववायुजलपृथ्वीवह्निबीजैस्त्रिधा पुनः । अभिमन्त्र्य च मूलेन सप्तधा तत्त्वमुद्रया ॥ निःक्षिप्य तज्जलं मुर्द्ध्नि शेषं दक्षे निधाय च । शरीरान्तःस्थितं पापं क्षालयेत् साधकाग्रणीः ॥ इति । शिवो हं वायुर्यं जलं वं पृथ्वी लं वह्नी रं ।

जपेत् श्रीमहालक्ष्म्यै विद्महे महाश्रियै धीमहि तन्नः श्रीः प्रचोदयात् इति(१) यथाशक्ति जप्त्वा सशिवायै देव्यै गायत्र्यार्घ्यत्रयं दत्त्वा ऐशान्यां गुरुं दिव्यौघ-सिद्धौघमानवौघानपि गुरून् सन्तर्प्य जले यन्त्रं वि-भाव्य देवीमावाह्य मूलेन लक्ष्मीं सशिवां तर्प्पयामि नम इति सप्तधा सन्तर्प्य मूलं लक्ष्मीं सायुधां स-वाहनां सपरिवारां सावरणामीश्वरसहितां तर्पयामि नमः पुनः ओं ह्रीं हंसः मार्तण्डभैरवाय प्रकाश-शक्तिसहिताय एष ते ऽर्घ्यो नम इति त्रिर्मूलेन पितॄंस्तर्पयेत् पुनर्यथाशक्ति गायत्रीं जपेत्। गायत्रीं दशधा जप्त्वा मुच्यते सर्वकिल्बिषैः। महापातक-युक्तोऽपि याति देवि परं पदम् ॥ इति जपं देव-देव्योः समर्प्य हृदि विसृज्य यागगेहमागच्छेत् ॥ इति सन्ध्याविधिः ॥ ततो गृहद्वारमेत्य द्वारदेवताः पूजयेत् वामे गणेशाय नमः दक्षिणे धर्म्माय नमः पश्चिमे वरुणाय नमः उत्तरे कुवेराय नमः इति सम्पूज्य(२) गृहान्तः प्रविश्य यथोक्तमासनं शोधयेत्

---

(१) श्रीमहालक्ष्म्यै विद्महे हरिप्रियायै धीमहि तन्नो लक्ष्मीः प्रचोदयात् इति प्रथमपुस्तके पाठः।

(२) केचित्तु आदौ द्वारदेशे सामान्यार्घस्थापनम्। यथा स्ववामे त्रिकोणवृत्तं भूबिम्बं विलिख्य ओं आधारशक्तये नमः इति सम्पूज्य

ओं अस्य श्रीआसनमन्त्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः श्रीकूर्मो देवता आसनोपवेशने विनियोगः ओं पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ ओं ह्रीं अनन्ताय नमः इं कूर्माय नमः आधारशक्तिसहस्रारविन्दमकरन्दरञ्जितकर्णिकायै नमः ॥ इं समुद्ररसनायै नमः इं सरस्वत्यै नमः इति सम्पूज्य अपसर्पन्तु ते भूता ये भूता ये भूता भुवि संस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ इति तालत्रयं दत्त्वा वामपार्ष्णिघातत्रयेण विघ्नान् भूतांश्च निःसार्य नाराचमुद्रां प्रदर्शयेदित्यासनं संशोध्य(१) पूर्ववदाचम्य प्राणायामं त्रिः कृत्वा षडङ्ग

---

फडितिमन्त्रेण पात्रं प्रक्षाल्य साधारं शङ्खं तत्र निधाय नम इति जलनापूर्य अङ्कुशमुद्रया सूर्यमण्डलात् गङ्गे चेत्यादिना तीर्थमावाह्य प्रणवेन गन्धादीन् निःक्षिप्य धेनुमुद्रां प्रदर्श्य हुमित्यष्टधा दशधा वा जप्त्वा फडितिमन्त्रेण तज्जलेन द्वारमभ्युक्ष्य द्वारपूजामारभेदित्याहुः। निबन्धे तु द्वारदेवता एवमुक्ताः। द्वारमस्त्रादिभिः प्रोक्ष्य द्वारपूजां समाचरेत्। उर्द्ध्वोडुम्बरके विघ्नं महालक्ष्मीं सरस्वतीम्। ततो दक्षिणशाखायां विघ्नं क्षेत्रेशमन्वतः। तयोः पार्श्वद्वये गङ्गायमुने पुष्पवारिभिः। देहल्यामर्चयेदस्त्रं प्रतिद्वारमिति क्रमात्। स्वतन्त्रतन्त्रे एवमाह। गणेशं क्षेत्रपालं च योगिनीं वटुकं तथा। गङ्गां च यमुनां चैव लक्ष्मीं वाणीं ततो यजेत्। इति तु त्रिपुरादौ विशेषः उक्तः।

(१) अन्ये तु द्वारदेवतापूजानन्तरं दक्षिणपादपुरःसरं वामशा-

विधाय प्राणायामयोगेन भूतशुद्धिं कुर्यात् ओं हुमित्यवगुण्ठेन सुषुम्नावर्त्मना प्रदीपकलिकाकारं स्वजीवं ब्रह्म यथान्तर्नीत्वा तेजोरूपं विभाव्य आदौ यमिति वायुबीजेन षोडशधा जप्तेन धूम्रवर्णेन चतुष्कोणेन वामकुक्षिस्थपापपुरुषं शोधयेत् ततो रमिति वह्निबीजेन चतुषष्टिवारजप्तेन रक्तवर्णशरीरं दाहयेत् ठमितीन्दुबीजेन द्वात्रिंशद्वारजप्तेन पीतवर्णेन षट्कोणे तदगलितामृतवृष्ट्या प्लावयेत् वं इति वरूणबीजेन षोडशवारजप्तेन गलदमृतवृष्ट्या सह पिङ्गलया रेचयेत् इतिविगतसकलकिल्बिषं दिव्यदेहं विभाव्य प्राणप्रतिष्ठां विदध्यादितिभूतशुद्धिः ॥ ओं सोहं हंसः मम प्राणाः ओं सोहं हंसः मम जीव इह स्थितः ओं सोहं हंसः मम सर्वेन्द्रियाणि ओं सोहं हंसः इह वाङ्मनस्त्वक्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य

---

स्वां स्पृशन् दक्षिणाङ्गं सङ्कोचयन् मण्डपान्तः प्रविश्य नैऋत्यां ओं वास्तुपुरुषाय नम इति पजयेत्। ततो दिव्यदृष्ट्यावलोकनाद्दिव्यान् विघ्नानुत्सार्य ओं अस्त्राय फडिति मन्त्रेण तज्जलेनान्तरीक्षगान् विघ्नानुत्सारयित्वा पार्ष्णिघातैर्भौमान् विघ्नान्निवारयेत् ततः फडितिसमजप्तान् विकिरानादाय ओं अपसर्पन्त्वित्यादिमन्त्रेण तान् विकीर्य आसनशुद्धिं कुर्यादित्याहुः। उभयथा सम्भवति। तदुक्तम्। आदौ विघ्नान् समुत्सार्य पश्चादासनकल्पनम्। अथ वा चासने स्थित्वा विघ्नानुत्सारयेत् सुधीः॥ इति।

सुखं चिरं तिष्ठन्तु स्वाहा इतिप्राणप्रतिष्ठां विधाय न्यासपूर्वकं सङ्कल्पं कुर्यात् अस्य श्रीलक्ष्मीपूजामन्त्रस्य भृगुऋषिस्त्रिष्टुपछन्दो महालक्ष्मीर्देवता श्रीं बीजं ह्रीं शक्तिः क्लीं कीलकं मम श्रीधर्मार्थकाममोक्षार्थे विनियोगः ॥ अथ करन्यासः ॥ श्रां अङ्गुष्ठाभ्यां नमः श्रीं तर्जनीभ्यां स्वाहा श्रूं मध्यमाभ्यां वषट् श्रैं अनामिकाभ्यां हुं श्रौं कणिष्ठिकाभ्यां वौषट् श्रः करतलकरपृष्ठाभ्यां फट् ॥ अथ हृदयादिन्यासः ॥ श्रां हृदयाय नमः श्रीं शिरसे स्वाहा श्रूं शिखायै वषट् श्रैं कवचाय हुं श्रौं नेत्रत्रयाय वौषट् श्रः अस्त्राय फट् ॥ इति कराङ्गन्यासौ ॥ आदौ ऋष्यादिन्यासः ॥ शिरसि भृगुऋषये नमः मुखे त्रिष्टुपछन्दसे नमः हृदि महालक्ष्मीदेवतायै नमः नाभौ श्रींबीजाय नमः गुह्ये ह्रींशक्तये नमः पादयोः क्लींकीलकाय नमः मम श्रीधर्मार्थकाममोक्षार्थे जपे विनियोगः सर्वाङ्गे करषडङ्गान्तर्मातृकान्यासो विधेयः इतित्रिर्व्यापयेत् एवं न्यासं विधाय पूर्ववदाचम्य प्राणायामं कृत्वा गुरुं ध्यायेत् अखण्डमण्डलाकारं व्याप्तं येन परात्परम्(१) ॥ तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ इति श्रीगुरुं प्रणम्य ततो देवीं

---

(१) चराचरमितिपाठान्तरम् ।

सशिवां ध्यायेत् ॥ करयुगलगृहीतं पूर्णकुम्भं दधानां क्वचिदमलगजस्थां शङ्खचक्राब्जपाणिम् ॥ क्वचिदपि दयितांङ्कि चामरव्यग्रहस्तां क्वचिदपि सृणि पाणौ बिभ्रतीं नौमि लक्ष्मीम् ॥ इति ध्यात्वा मूलं यथाशक्ति जप्त्वा जपं देवदेव्योः समर्पयेत् ॥ श्रीचक्रं मनसा विभाव्य विलिख्य वा पूजयेदिति ध्यात्वा मानसोपचारैराराध्य वहिस्तच्छ्रीचक्रं चतुरस्रं वसुदलालङ्कृतं वृत्तं मध्ये षड्दशकोणाकारं अस्रविन्दुविराजमानं विचिन्वन् पीठपूजां कुर्यात् इं मं कुरुण्डकाय नमः इं लं कालाग्निरुद्राय नमः ॥ पद्मराजे इं मूलप्रकृत्यै नमः इं आधारशक्त्ये नमः। मध्ये इं नवरत्नविराजितनवरत्नमयद्वीपाय नमः इं पद्मराजखण्डाय नमः इं स्वर्णगिरये नमः इं नन्दनोद्यानाय नमः इं कल्पवनाय नमः इं पद्मवनाय नमः इं विचित्ररत्नखचितभूमिकायै नमः इं चिन्तामणिमण्डपाय नमः इं नवरत्नखचितनवरत्नमयीवेदिकायै नमः इं रत्नसिंहासनाय नमः। तन्मध्ये सहस्रारपद्माय नमः इं प्रकृतिमयपत्रेभ्यो नमः इं विकृतिमयकेशरेभ्यो नमः। तन्मध्ये बीजमणिभूषितकर्णिकायै नमः। तत्पार्श्वे इं धर्माय इं ज्ञानाय इं वैराग्याय इं ऐश्वर्याय इं अधर्माय इं अज्ञानाय इं

अवैराग्याय इं अनैश्वर्याय नमः मध्ये सं सत्त्वाय रं रजसे तं तमसे। मूलमुच्चार्य श्रीचक्रे पुष्पाञ्जलित्रयं पूर्णपात्रस्थापनं कुर्यात् ॥ इति पीठपूजा ॥ तत्र स्ववामे त्रिकोणवृत्तचतुरस्रे मण्डलं विधाय मूलमुच्चार्य श्रीलक्ष्मीसामान्यार्घ्यमण्डलाय नमः तत्र मण्डले ऽप्रक्षालितां त्रिपादिकां शङ्खं संस्थाप्य ओं ऐं क्लीं ह्रीं अं अर्कमण्डलाय द्वादशकलात्मने नमः इति सम्पूज्य मूलमुच्चार्य विलोममातृकया सम्पूर्य सौः सोममण्डलाय षोडशकलात्मने नमः ॥ इत्यभ्यर्च्य मूलाष्टाभिमन्त्रितं कृत्वा गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु इत्यनेन तीर्थमावाह्य शुद्धं भावयेदिति सामान्यार्घ्यस्थापनविधिः ॥ अथ कलशस्थापनम् ॥ कलशस्थापनानन्तरं तद्वन्मण्डलादिचतुष्टयं प्रपूज्य तत्र प्रोक्षणीपात्रे पाद्याचमनीयादि परिकल्पयेत् तत्र मूलेन स्नानं तैलाभ्यङ्गस्नानं तीर्थस्नानं विधाय पुनरलङ्कारैरलङ्कृत्य श्रीचक्रं मनसा विभाव्य पूजयेत् नैवेद्यगन्धाक्षतपुष्पेभ्यो नमः इं जं जयध्वनिमातर्घण्टायै नमः मूलेन षडङ्गं विधाय प्रदीपादीन् निवेदयेत् नैवेद्याचमनीयं गन्धताम्बूलच्छत्रचामरादीन् निवेदयेत् मूलेन षडङ्गं विधाय

चतुरस्रं पूजयेत् इं सर्वसिद्धिप्रदाय कामचक्राय नमः इति पुष्पाञ्जलिं दत्त्वा ॥ ओं ह्रीं श्रीं गं गणपतये नमः इं धं धर्म्मराजाय नमः इं वं वरुणाय नमः इं कुं कुवेराय नमः ततः स्वहृदयाद्देवीं तत्रावाह्य ओं देवेशि भक्तिसुलभे परिवारसमन्विते। यावत्त्वां पूजयिष्यामि तावत् त्वं सुस्थिरा भव इत्यावाहनादिमुद्राः प्रदर्श्य पाद्यादिना सम्पूज्य विल्वैर्देवीं त्रिः सम्पूज्य सन्तर्प्य देव्या आज्ञां गृहीत्वा आवरणपूजामारभेत् यथा आदौ गुरुपूजा ओं विभूतिः श्रीपादुकां पूजयामि नमः ओं उन्नतिः श्रीपादुकां पूजयामि नमः। ओं कान्तिः श्रीपादुकां पूजयामि नमः। ओं सृष्टिः श्रीपादुकां पूजयामि नमः। ओं कीर्त्तिः श्रीपादुकां पूजयामि नमः। ओं रुन्नतिः श्रीपादुकां पूजयामि नमः। ओं व्युष्टिः श्रीपादुकां पूजयामि नमः। ओं उत्कृष्टिः श्रीपादुकां पूजयामि नमः। ओं ऋद्धिः श्रीपादुकां पूजयामि नमः इति केशरेषु पूर्वादिमध्ये पीठशक्तीः पीठमनूंश्च पूजयेत् प्रणवादिनमोऽन्तेनार्च्चयेत् तदुपरि श्रीं कमलाय नमः वामावर्त्तेन पूजयेत् केशरेष्वग्न्यादिकोणेषु मध्ये दिक्षु च श्रां हृदयाय नमः इत्यादिना षडङ्गानि पूजयेत् दिग्दलेषु पूर्वादितः दक्षिणावर्त्तेन पूजयेत्। ओं

वासुदेवाय नमः ओं सङ्कर्षणाय नमः ओं प्रद्युम्नाय नमः ओं अनिरुद्धाय नमः। विदिक्षु दलेषु। ओं दमकाय नमः ओं सलिलाय(१) नमः ओं गुग्गुलवे नमः ओं कुरुण्डकाय नमः ततो देव्या दक्षिणे। ओं शङ्खनिधये नमः ओं वसुन्धरायै नमः। वामे। ओं पद्मनिधये नमः ओं वसुमत्यै नमः(२) ततः पद्माग्रेषु पूर्वादितः। ओं वलाक्यै नमः ओं विमलायै नमः ओं कमलायै नमः ओं वनमालिकायै नमः ओं विभीषिकायै नमः ओं मालिकायै नमः ओं शाङ्कर्यै नमः ओं वसुमालिकायै नमः प्रणवादिनमोऽन्तेन पूजयेत्(३) इति चतुर्थावरणम्॥ तद्बहिरिन्द्रादीन् वज्रादींश्च पूजयेत्। ओं इन्द्राय नमः ओं अग्नये ओं यमाय ओं नैर्ऋतये ओं वरु-

---

(१) शनकायेति पाठान्तरम्।

(२) तथा च शारदायाम्। यजेत् पूर्ववदङ्गानि दिग्दलेष्वर्चयेत्ततः। वासुदेवं सङ्कर्षणं प्रद्युम्नमनिरुद्धकम्॥ विदिग्दलेषु सर्वेषु दमकादीन् यजेत् गजान्। दमकं शनकं भूयो गुग्गुलुं च कुरुण्डकम्॥ यजेच्छङ्खनिधिं देव्या दक्षिणे दययान्वितम्। वामतः पङ्कजनिधिं प्रियया सहितं यजेत्॥ इति।

(३) शारदायाम्। वलाकी विमला चैव कमला वनमालिका। विभीषिका मालिका च शाङ्करी वसुमालिका॥ दलाग्रेषु यजेदेता वलाकाद्यास्तदन्ततः॥ इति।

णाय ओं अनिलाय ओं कुवेराय ओं ईशानाय ऊर्द्ध्वं ओं ब्रह्मणे अधः ओं अनन्ताय ओं वज्राय ओं शक्तये ओं दण्डाय ओं खड्गाय ओं पाशाय ओं अङ्कुशाय ओं गदायै ओं त्रिशूलाय ओं चक्राय ओं पद्माय नम इति सम्पूजयेत् ॥ इत्यष्टावरणम् । तद्बहिः ओं हेरम्बभैरवाय ओं वेतालभैरवाय ओं त्रिपुरान्तकभैरवाय ओं एकपालभैरवाय ओं अग्निजिह्वभैरवाय ओं तारकेश्वरभैरवः श्रीपादुकां पूजयामि इति सम्पूजयेदिति सप्तावरणम् ॥ ततो देव्या अस्त्राणि सम्पूज्य सङ्कल्पपूर्वं न्यासं विधाय षडङ्गं कृत्वा देवीं ध्यायन् यथाशक्ति जपं विधाय देवदेव्योः जपं समर्प्य कवचसहस्रनामस्तवपाठं विधाय समर्प्य ओं गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥ मलं त्रिरुच्चार्य नैवेद्याचमनीयताम्बूलादीन् समर्पयेत् ततो मूलेन क्षेत्रपालपूजा ॥ मूलेन च्छत्रचामरारात्रिकादीन्निवेद्य बलिं विसृज्य प्रातःप्रभृतिसायह्वं सायाह्वात् प्रातरन्ततः । यत्करोमि जगद्योने तदस्तु तव पूजनम् ॥ इतिदण्डवत् प्रणम्य मूलेन पुष्पाञ्जलिं दत्त्वा संहारमुद्रया स्वहृदि देवीं विसृज्य स्वयं सदाशिवो भूत्वा स्वशक्त्या सह सुखं विहरेदिति पू-

जाविधिः ॥ इतिमापद्धतिर्गुह्या श्रीलक्ष्म्या गदारूपिणी। रहस्या सारगर्भा च गोपनीया स्वयोनिवत् ॥

इतिश्रीरुद्रयामले विश्वसारोद्धारे तन्त्रे श्रीलक्ष्मीनित्यपूजापद्धतिः समाप्ता।

## अथ लक्ष्मीकवचम्।

अथ वक्ष्ये महेशानि कवचं सर्वकामदम्। यस्य विज्ञानमात्रेण भवेत् साक्षात् सदाशिवः। नार्च्चनं तस्य देवेशि मन्त्रमात्रं जपेन्नरः। स भवेत् पार्वतीपुत्रः सर्वशास्त्रपुरस्कृतः॥ विदग्धार्थिना सदा सेव्या विशेषात् विष्णुवल्लभा। अस्याश्चतुरक्षरीविष्णुवनितायाः कवचस्य श्रीभगवानृषिरनुष्टुप् छन्दो वाग्भवी देवता वाग्भवं बीजं लज्जा शक्तिः रमा कीलकं कामराजात्मकं कवचं मम सुपाण्डित्यकवित्वसर्वसिद्धिसमृद्धये विनियोगः। ऐंकारो मस्तके पातु वाग्भवी सर्वसिद्धिदा। ह्रीं पातु चक्षुषोर्मध्ये चक्षुर्युग्मे च शाङ्करी। जिह्वायां मुखवृत्ते च कर्णयोर्गण्डयोर्नसि। ओष्ठाधरे दन्तपङ्क्तौ तालुमूले हनौ पुनः। पातु मां विष्णुवनिता लक्ष्मीः श्रीवर्णरूपिणी। कर्णयुग्मे सदा पातु भुजद्वन्द्वे च पार्वती। हृ-

दये मणिबन्धे च ग्रीवायां पार्श्वयोः पुनः। पृष्ठदेशे तथा गुह्ये वामे च दक्षिणे तथा। उपस्थे च नितम्बे च नाभौ जङ्घाद्वये पुनः। जानुचक्रे पदद्वन्द्वे कटिके ऽङ्गुलिमूलके। सधातुप्राणशक्त्यात्मसीमन्यां मस्तके पुनः। सर्वाङ्गे पातु कामेशी महादेवी समुन्नतिः। व्युष्टिः पातु महामाया उत्कृष्टिः सर्वदावतु। ऋद्धिः पातु सदा देवी सर्वत्र शम्भुवल्लभा। वाग्भवी सर्वदा पातु मां पातु हरगेहिनी। रमा पातु सदा देवी पातु माया सुराट् स्वयम्। सर्वाङ्गे पातु मां लक्ष्मीर्विष्णुमाया सुरेश्वरी। विजया भवने पातु जया पातु सदा मम। शिवदूती सदा पातु सुन्दरी पातु सर्वदा। भैरवी पातु सर्वत्र भेरुण्डा सर्वदावतु। त्वरिता पातु मां नित्यमुग्रतारा सदावतु। पातु मां कालिका नित्यं कालरात्रिः सदावतु। वनदुर्गा सदा पातु कामाख्या सर्वदावतु। योगिन्यः सर्वदा पान्तु मुद्राः पान्तु सदा मम। मात्राः पान्तु सदा देव्यश्चक्रस्था योगिनीगणाः। सर्वत्र सर्वकार्येषु सर्वकर्मसु सर्वदा। पातु मां देवदेवी च लक्ष्मीः सर्वसमृद्धिदा। इति ते कथितं दिव्यं कवचं सर्वसिद्धये। यत्र तत्र न वक्तव्यं यदीच्छेदात्मनो हितम्। शठाय भक्तिहीनाय निन्दकाय महेश्वरि।

न्यूनाङ्गे चातिरिक्ताङ्गे दर्शयेन्न कदाचन। न स्तवं दर्शयेद्दिव्यं सन्दर्श्य शिवहा भवेत्। कुलीनाय महेच्छाय दुर्गाभक्तिपराय च। वैष्णवाय विशुद्धाय दद्यात् कवचमुत्तमम्। निजशिष्याय शान्ताय धनिने ज्ञानिने तथा। दद्यात् कवचमित्युक्तं सर्वतन्त्रसमन्वितम्। शनौ मङ्गलवारे च रक्तचन्दनकैस्तथा। यावकेन लिखेन्मन्त्रं सर्वतन्त्रसमन्वितम्। विलिख्य कवचं दिव्यं स्वयम्भूकुसुमैः शुभैः। स्वशुक्रैः परशुक्रैश्च नानागन्धसमन्वितैः। गोरोचनाकुङ्कुमेन रक्तचन्दनकेन वा। सुतिथौ शुभयोगे वा श्रवणायां रवेर्दिने। अश्विन्यां कृत्तिकायां वा फाल्गुण्यां वा मघासु च। पूर्वभाद्रपदा योगे स्वात्यां मङ्गलवारके। विलिखेत् प्रपठेत् स्तोत्रं शुभयोगे सुरालये। आयुष्मति प्रीतियोगे ब्रह्मयोगे विशेषतः। इन्द्रयोगे शुभयोगे शुक्रयोगे तथैव च। कौलवे वालवे चैव वनिजे चैव सत्तमः। शून्यागारे श्मशाने वा विजने च तथैव च। कुमारीं पूजयित्वादौ यजेद्देवीं सनातनीम्। मत्स्यमांसैः शाकपूपैः पूजयेत् परदेवताम्। घृताद्यैः सोपकरणैः पूपसूपैर्विशेषतः। ब्राह्मणान् भोजयित्वा च पूजयेत् परमेश्वरीम्। आखेटकमुपाख्यानं तत्र कुर्याद्दिनत्रयम्। तदा धरेन्महारक्षां शङ्करेण च

भाषिताम् । मारणद्वेषणादीनि लभते नात्र संशयः । स भवेत् पार्वतीपुत्रः सर्वशास्त्रपुरस्कृतः । गुरुर्देवो हरः साक्षात् पत्नी तस्य हरप्रिया । अभेदेन यजेत् यस्तु तस्य सिद्धिरदूरतः । पठति य इह मर्त्यो नित्यमार्द्रान्तरात्मा जपफलमुपेयं लप्स्यते यद्विधेयम् । स भवति पदमुच्चैः सम्पदां पादनम्रक्षितिपमुकुटलक्ष्मीलक्षणानां चिराय ।

इति विश्वसारतन्त्रे लक्ष्मीकवचं समाप्तम् ।

—o—

## अथ श्रियो द्वादशनामस्तोत्रम् ।

ईश्वर उवाच । त्रैलोक्यपूजिते देवि कमले विष्णुवल्लभे । यथा त्वं सुस्थिरा कृष्णे तथा भव मयि स्थिरा । ईश्वरी कमला लक्ष्मीश्चला भूतिर्हरिप्रिया । पद्मा पद्मालया सम्पदुच्चैः श्रीः पद्मधारिणी ॥ द्वादशैतानि नामानि लक्ष्मीं सम्पूज्य यः पठेत् । स्थिरा लक्ष्मीर्भवेत्तस्य पुत्रदारादिभिः सह ॥

इति लक्ष्मीस्तोत्रं समाप्तम् ॥

—•••—

## अथ लक्ष्मीसहस्रनामस्तोत्रम् ।

सनत्कुमार उवाच । साधु पृष्टं महाभागैः सर्वलोकहितार्थिभिः । महतामेष धर्म्मः स्यान्नान्येषा-

मिति मे मतिः ॥ ब्रह्मविष्णुमहादेवैर्महालक्ष्मीस्तुतिः परा । प्रोक्ता तां कथयिष्यामि दुःखदारिद्र्यभञ्जनीम् ॥ ओं अस्य श्रीमहालक्ष्मीसहस्रनामस्तोत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः अनुष्टुप् छन्दः श्रीमहालक्ष्मीर्देवता महालक्ष्मीप्रीत्यर्थे जपे विनियोगः ॥ देवा ऊचुः ॥ महालक्ष्मीर्महाकाली महाकन्या सरस्वती । महासरस्वती देवी भक्तानुग्रहकारिणी ॥ १ ॥ ईशावाच्या महादेवी महामाया सरस्वती । हृल्लेखा परमा शक्तिर्मातृकाबीजरूपिणी ॥ २ ॥ नित्या सर्वगतानन्ता नित्यानन्दनिरञ्जना । नित्या प्रकाशिनी देवी स्वयंप्रकाशरूपिणी ॥ ३ ॥ त्रिपुराभैरवी विद्या हंसो वागीश्वरी शिवा । वागीश्वरी महारात्रिः कालरात्रिस्त्रिलोचना ॥ ४ ॥ भद्रकाली करालीशा उमा गौरी तिलोत्तमा । काली करालविक्रान्ता कामाख्या कामदा शिवा ॥ ५ ॥ चण्डिका चण्डरूपेशा चामुण्डा लिङ्गधारिणी । त्रैलोक्यविजया देवी त्रैलोक्यविजयोत्तमा ॥६॥ सिद्धलक्ष्मीः श्रिया देवी मोक्षमार्गप्रदायिनी । उमा भगवती उग्रचण्डा दाक्षायणी वरा ॥ ७॥ प्रत्यङ्गिरा धरा वेला लोकमाता हरिप्रिया । पार्वती परमा विद्या ब्रह्मविद्याप्रदायिनी ॥८॥ अरूपा बहुरूपा च सुरूपा विश्वरूपिणी । पञ्चभूतात्मिका

देवी चण्डिका चण्डरूपिणी ॥ ९ ॥ काशिका
पञ्चिका पङ्क्तिः हविष्मत्पादपङ्क्तिका । देवमाता
सुरेशानी देवगर्भाम्बिका धृतिः ॥ १० ॥ सन्ध्या
जातिः क्रिया व्यक्तिः प्रकृतिर्मोहिनी मही । यज्ञ-
विद्या महाविद्या गुह्यविद्या विभावरी ॥ ११ ॥
ज्योतिष्मती महामाता सर्वमन्त्रफलप्रदा । दारिद्र्य-
ध्वंसिनी देवी हृदयग्रन्थिभेदिनी ॥ १२ ॥ सह-
स्रादित्यसङ्काशा चन्द्रिका चन्द्ररूपिणी । अकारा-
दिक्षकारान्ता मातृका चाप्रमातृका ॥ १३ ॥ गायत्री
सामसम्भूतिः सादित्या प्रणवात्मिका । शाङ्करी
वैष्णवी ब्राह्मी सर्वदेवनमस्कृता ॥ १४ ॥ नवदुर्गा
विशालाक्षी करवीरनिवासिनी । कुब्जिका कौलिका
शाम्बी वीणापुस्तकधारिणी ॥ १५ ॥ सर्वशक्तिस्त्रिश-
क्तिश्च ब्रह्मविष्णुशिवात्मिका । ईडापिङ्गलमध्यस्था
मृडानी तन्तुरूपिणी ॥ १६ ॥ यज्ञसेना ध्रुवा दीक्षा
दक्षिणा सर्वमोहिनी । अष्टाङ्गयोगिनी देवी निर्बी-
जध्यानगोचरा ॥ १७ ॥ सर्वतीर्थस्थिता शुद्धा सर्व-
पर्वनिवासिनी । वेदशास्त्रप्रपारूपा सा षडङ्गपद-
क्रमा ॥ १८ ॥ शिक्षा धात्री शुभा नन्दा यज्ञकर्म्म-
स्वरूपिणी । व्रतिनी मौनिका देवी ब्रह्माणी ब्रह्मचा-
रिणी ॥ १९ ॥ एकाकारपरा तारा तारकी भयभ-

ङ्गिनी । ऋतम्भरा धराधारा निराधाराधिकस्वना ॥ २० ॥ एका कुहूरमावास्या पूर्णिमानुमतिर्द्युतिः । शिनीवाली शिवा वेश्या वैश्यदेवी पिशाङ्गिका ॥२१॥ पिलिपिला विशालाक्षी रक्षोघ्नीवृष्टिकारिणी । दुष्ट-विद्राविणी देवी सर्वोपद्रवनाशिनी ॥ २२ ॥ जया च विजया चैव जयन्ती चापराजिता । शारदा शरसन्धाना सर्वशास्त्रार्थधारिणी ॥२३॥ विश्वम्भरा कार्यकर्त्री नित्या निर्मलभङ्गिनी। सन्ध्या रात्रिर्दिवा ज्योत्स्ना कला काष्ठा निमेषिका ॥ २४ ॥ गुर्वी कात्यायनी शुभ्रा संसारार्णवतारिणी। कपिला काली काशाला मालिका नवमल्लिका ॥ २५ ॥ देविका नन्दिका शान्ता भञ्जिका सर्वभञ्जिका । दिवा सर्वशशी कान्ता कन्यका कमलोद्भवा ॥ २६ ॥ त्रिसूक्तलक्षणा देवी दुर्गा सूक्ता प्रबोधिका । श्रद्धा मेधा धृतिः प्रज्ञा धारणा शान्तिरेव च ॥ २७ ॥ श्रुतिः स्मृतिर्धृतिर्धन्या नीतिरिष्टिर्मनिषिणी । काशिका वयसामीशा शक्रादिः पथिका स्थिता ॥ २८ ॥ विरक्तिर्वैष्णवी माया सर्वमायाप्रभञ्जिनी । माहेन्द्री मन्त्रपुष्पगा माहेन्द्री जालरूपिणी ॥ २९ ॥ अव-स्थात्रयनिर्मुक्ता सर्वरोगविवर्जिता । दुष्टपात्रविनि-र्मुक्ता सर्वदोषविवर्जिता ॥ ३० ॥ योगध्यानैकगम्या

सा योगध्यानपरायणा। त्रयी सन्ध्या विशोका च
वेदान्ता ज्ञानरूपिनी ॥ ३१ ॥ भारती कमला-
भासा पद्मा हैमवती स्मृतिः। गौतमी गौतमीगौरा
ईशानी ईशवाहिनी ॥ ३२ ॥ नारायणी प्रभाधारा
जाह्नवी शङ्करात्मजा। व्याघ्रचर्मपरीधाना नागय-
ज्ञोपवीतिनी ॥ ३३ ॥ निर्मांसा भस्मदिग्धाङ्गी
ब्रह्मकङ्कालधारिणी। विशीर्णा च विशालाक्षी माया-
देवी सुरेश्वरी ॥ ३४ ॥ दिव्यघण्टा सुनासा च
मानवी मनुसम्भवा। स्तम्भिनी क्षोभिनी वीणा
भ्रामणी मारणाकृतिः ॥ ३५ ॥ मोहिनी द्वेषिणी
घोरा घोरेशा घोररूपिणी। रुद्रैकादशिनी पुण्या
कल्याणी लाभकारिणी ॥ ३६ ॥ विद्युन्मती महा-
दुर्गाः सप्तदुर्गाष्टभैरवी। सूर्यचन्द्रार्कभास्या च
ग्रहनक्षत्ररूपिणी ॥ ३७ ॥ विन्दुनादकलातीता
विन्दुनादकलात्मिका। दिशा वायुर्जयकरा कला-
षोडशसंयुता ॥ ३८ ॥ काश्यपी कमला देवी नाभि-
चक्रनिवासिनी। षडाधारस्थिता गुह्या दैविका चक्र-
रूपिणी ॥ ३९ ॥ अविद्या सर्वरी शुभ्रा सुरासुर-
निवर्हणा। त्रिकार्या त्रिकला शुभ्रा कर्मनिर्मूल-
कारिणी ॥ ४० ॥ आदिलक्ष्मीर्गुणाधारा पञ्चब्रह्मा-
त्मिका वलिः। कृतब्रह्ममुखावासा सर्वदेवस्वरूपिणी

॥ ४१ ॥ सुतसञ्जीवनी देवी कामिका कामवर्जिता ।
निर्वाणमार्गदा देवी हंसिनी कार्मुकी क्षमा ॥ ४२ ॥
अविद्या गणता वेधा निर्गुणा खण्डिका सुधा ।
सौमिकी वेदिरिज्यास्या छवरी चक्रधारिणी ॥ ४३ ॥
इन्द्रानी मुण्डिनी व्याघ्री शङ्खिनी सोमसंहतिः ।
सौदामनी सदानन्दा पञ्चवाणप्रभञ्जिनी ॥ ४४ ॥
वाणा शोणा सहस्राक्षा सहस्रभुजपादुका । सन्ध्या
वला त्रिसन्ध्याक्षा ब्रह्माण्डमणिभूषणा ॥ ४५ ॥ र-
तिका रत्नमाला श्रीः कामधेनुरुरुक्रमा । चिन्तामणी
रूपदेवी कर्णिका कर्णभूषणा ॥ ४६ ॥ अश्वत्थवरणा
सेना काशिका कामभञ्जिनी । पञ्चप्रणवरूपादि-
कान्ता काम्या वरानना ॥ ४७ ॥ मन्त्रब्राह्मणवि-
द्यार्थी वादरूपा हविष्मती । अथर्वणी श्रुतिः शून्या
कल्यानावर्जिता सती ॥ ४८ ॥ सत्ता जातिः प्रभा
मैत्री प्रमितिः प्रणवाकृतिः । अवर्णा पञ्चवर्णा च
सर्वदा भुवनेश्वरी ॥ ४९ ॥ त्रैलोक्यवाहिनी विद्या
सर्वाधारा क्षराक्षरा । हिरण्यवर्णा हरिणी सर्वोप-
द्रवभेषजी ॥५०॥ कैवल्यपदवीगम्या सूर्यमण्डलसं-
स्थिता । वायुमण्डलमध्यस्था व्योममण्डलसंस्थिता
॥ ५१ ॥ चक्रिका चक्रमध्यस्था चक्रमार्गप्रदायिनी ।
कालिका कुलचक्रेशा यक्षको पङ्क्तिपावनी ॥ ५२ ॥

सर्व्वसिद्धान्तमार्गस्था षड्वर्णा वर्णवर्जिता। शतरूपा महातन्त्री सर्वसंहारकारिणी ॥ ५३ ॥ सर्वतुष्टिकरा देवी सर्वपालनकारिणी । पुरुषी पौरुषी वृष्टिः सर्व्वतत्त्वप्रसूतिका ॥५४॥ अर्द्धनारीश्वरा देवी सर्व-विद्याप्रदायिनी । भार्गवी याजुषी विद्या सर्वोप-निषदास्थिता ॥ ५५ ॥ त्रिकाण्डज्ञानसम्पत्ति-र्नान्दिनी कमलानना। सूक्ष्मा शान्तिः पृथा देवी माधवी गन्धवाहना ॥ ५६ ॥ अचिन्त्या लक्षणा गोत्रा नामजात्यादिवर्जिता। सत्तामात्रास्थिताच्छिन्ना केवलज्ञानदीपिका ॥ ५७ ॥ व्योमकेशाखिलाधारा पञ्चकोशविलक्षणा । पञ्चकोशात्मिका देवी पञ्चब्र-ह्मात्मिका वशा ॥ ५८ ॥ जया जरा जनित्री च लोकालोकप्रसूतिका । वाग्देवीभरणाकारा सर्वसा-म्यस्थिता स्थितिः ॥ ५९ ॥ अष्टाष्टकचतुःषष्टिपी-ठिका विद्यया युता । कालिन्दी कर्म्मणा श्यामा यक्षिणी किन्नरेश्वरी ॥ ६० ॥ केतकी मल्लिका शोणा वाराही धरणी धरा । नारसिंही महोग्रास्या भक्तानामार्त्तिनाशिनी ॥ ६१ ॥ अन्तर्वहिःस्थिता लक्ष्मीर्जरामरणनाशिनी। त्रियम्बका महानारी सो-मसूर्य्याग्निलोचना ॥ ६२ ॥ अदितिर्देवमाता श्रीरष्ट-पत्राष्टयोनिका । अष्टप्रकृतिरष्टाष्टविभ्रमा विपुला-

कृतिः ॥ ६३ ॥ दुर्भिक्ष्यध्वंसिनी देवी सिता सत्या-
ङ्करुक्मिणी । व्याधिहा भार्गवी देवी दवपाना तप-
स्विनी ॥ ६४ ॥ शाकम्भरी महाघोरा गरुडोपरिसं-
स्थिता । सिंहगा व्याघ्रगा देवी वायुगा वारुणी नरा
॥ ६५ ॥ अकारादिहकारान्ता सर्वविदयाधिदेवता ।
मन्त्रव्याकरणाचारा ज्योतिःशास्त्रस्वरूपिणी ॥ ६६ ॥
इडापिङ्गलमध्यस्था सुषुम्ना नाभिभेदिनी । कालच-
क्राक्षयुक्ता सा कालचक्रप्रवर्त्तिनी ॥ ६७ ॥ वैशारदी
मतिश्रेष्ठा सर्वदात्मप्रदीपिका । वैनायकी महाघोरा
मलश्रेणीनिवारिणी ॥ ६८ ॥ जृम्भनी जृम्भिनी
जृम्भा कणिका गणिका शरा । सरमा चक्रिकान-
न्ता सर्वव्याधिप्रभेषजा ॥ ६९ ॥ देवकी देवसङ्काशा
वारधी करुणाकरा । शाम्भवी सर्वसम्पन्ना सर्वपाप-
प्रभञ्जिनी ॥ ७० ॥ एकमात्रा द्विमात्रा च त्रिमात्रा
च तथापरा । अर्द्धमात्रा तथा सूक्ष्मा तस्याप्यर्द्धा
तथापरा ॥ ७१ ॥ एकवीरा विशालाक्षी षट्पदार्थ-
मनस्विनी । नैष्कर्म्या निष्कला लोका ज्ञानकर्मा-
त्मिका गुणा ॥ ७२ ॥ सन्दोहानन्दसन्दोहा व्यो-
माकारानिरूपिता । गदग्पदात्मिका वाणी सर्वा-
लङ्कारसंयुता ॥ ७३ ॥ साधुबद्धपदन्यासा सर्वत्र
घटवासिनी । षट्तर्कतर्किताकारा सर्वतर्कविवर्जि-

ता ॥ ७४ ॥ आदित्यवर्णवर्णा सा तमसः पाररू-
पिणी। ब्रह्मण्या ब्रह्मसम्पन्ना ब्रह्मसम्पत्तिरूपिणी ॥
७५ ॥ पुराणन्यायमीमांसाधर्म्मशास्त्रान्तर्मिश्रिता।
वेदिका वेदरूपा सा कालिका कालरूपिणी ॥७६॥
परायणा महादेवी सर्वतत्त्वप्रवर्त्तिनी। हिरण्यवर्ण-
रूपा सा हिरण्यपदसम्भवा ॥ ७७ ॥ कैवल्यपदवी
पुण्या कैवल्यज्ञानगोचरा। ब्रह्मसम्पत्तिरूपा सा
ब्रह्मसम्पत्तिशालिनी ॥ ७८ ॥ भरणी शरणाधारा
सर्वलोकविवर्त्तिनी। पाशाङ्कुशधरा देवी वीणावादा-
क्षसूत्रिणी ॥७९॥ एकमूर्तिस्त्रयाधारा मधुकैटभभ-
ञ्जिनी। संख्या संख्यापनी ज्वाला ज्वलन्ती कामरू-
पिणी ॥८०॥ जागृतिः स्वप्नसम्पत्तिः सुषुप्तिः परिदा-
यिनी। कराळिनी महादंष्ट्रा भ्रुकुटीकुटिलानना ॥
८१ ॥ सर्वत्रासाः सुवासाश्च वृहती जगती समा।
छन्दोनुष्टुपप्रतिच्छन्दा कलुषी करुणात्मिका ॥ ८२ ॥
एकाक्षरपरायुक्ता सर्वदोषप्रभञ्जिनी। चक्षुष्मती
महादोषा खड्गचर्मधरा मितिः ॥ ८३ ॥ शिल्प-
विद्याधरा देवी सर्वतो भद्रकारिनी। अचिन्त्यलक्ष-
णाकारा सूत्रधार्यनिबन्धना ॥ ८४ ॥ सर्वा वेदा-
न्तसम्पत्तिः सर्वशास्त्रार्थमातृका। अकारादिक्षका-
रान्ता वर्णा मात्रा लिपिः क्रिया ॥ ८५ ॥ स्वाहा-

स्वधास्वरूपा सा स्तोभाक्षरनिरूपिता। द्वयी विद्या
सदानन्दा त्रयी विद्या सदाशिवा ॥ ८६ ॥ सर्वज्ञा
सर्वशक्तिश्च खेचरी त्वर्वगा वरा। हंसयुक्तविमान-
स्था हंसारूढा शशिप्रभा ॥ ८७ ॥ भावना वासना
भीतिराहुतिरमला रसा। अणिमादिगुणोपेता परा
काष्ठा परा गतिः ॥ ८८ ॥ तन्त्री परा विचित्राभा
व्योमगङ्गा वलिप्रिया। परुषा वारुणी वेश्या ऋग्यजुः-
सामरूपिणी ॥ ८९ ॥ महानदी महापुण्या गङ्गा
पुण्याङ्गनाप्रिया। समाधिधारिणीध्येया श्रोतव्या
श्रोत्रिया घृणिः ॥ ९० ॥ नामाख्यातपरा देवी ह्युप-
सर्गभुजा भृतिः। निर्याता रूढपा जङ्का मात्रा मात्र
विशेषणा ॥ ९१ ॥ आसीना शयनारूढा तिष्ठन्ती
धावतीति च। लक्ष्या लक्ष्यस्वरूपा सा सारूपा
गणिकाकृतिः ॥ ९२ ॥ एकरूपा तथारूपाद्वयरूपा
तथाकृतिः। समासतद्धिताकारा विभक्तिव्यञ्जना-
कृतिः ॥ ९३ ॥ स्वराकारा निराकारा स्त्रीप्रत्ययवि-
भूषिता। गम्भीरा गहना गुह्या योनिलिङ्गाङ्गरूपिणी
॥ ९४ ॥ शेषवासुक्यर्द्धशस्त्रा ब्रह्माण्डफलचर्वणा।
कारुण्याकारसम्पत्तिः कीलका मन्त्रकीलका ॥ ९५ ॥
शक्तिबीजात्मिका सर्वा मन्त्रभृल्लक्षिता मनुः। आ-
ग्नेयी वीतकार्या च वायव्या व्योमकान्तिनी ॥९६॥

सत्या ज्ञानात्मिका नन्दा ब्रह्मा ब्राह्मी सनातनी।
अविद्या वासना माया प्रकृतिर्मोहिनीति च ॥९७॥
शक्तिराधारशक्तिश्च चिच्छक्तिश्चेति शक्तिपा। वक्रा
ऋषिर्महामारी मारीच्ची मारसूदनी ॥ ९८ ॥ वीरा
विरजमार्गस्था सर्वमार्गप्रदायिनी। जाड्यापहामृता
निद्रा भवानी भवभञ्जिनी ॥ ९९ ॥ त्रिकालज्ञान-
सन्ताना त्रिकालज्ञानदायिनी। नानाजातिस्मृतिः
प्रज्ञा यशी देवी त्रिलोचना ॥ १०० ॥ परचित्तवि-
धानज्ञा वैशेषिकगुणाश्रया। हिरण्यकेशिनी देवी
ब्रह्मसूत्रविचक्षणा ॥ १ ॥ एकादशयुतपर्यन्ता वर्ण-
मात्रात्मिका परा। मधुमती मधुनाशा मधुमत्स्था
मधुप्रिया ॥ २ ॥ माध्वी देवी महाभागा मेघ-
गम्भीरनिःस्वना। ब्रह्मविष्णुशिवैर्ध्येया ज्ञातव्या च
विशेषतः ॥३॥ नाभौ वह्निशिखाकारा ललाटे सूर्य-
सन्निभा। भ्रूमध्ये भास्कराकारा सर्वाकारा हृदि
स्थिता ॥४॥ कृतिर्हृदयसंस्थाना महाकालात्मिका
त्रिका। वेदात्मिका महादेवी पञ्चभूतजनप्रिया ॥
५ ॥ ब्रह्माण्डगर्भिणी देवी सत्यावरणमातृका। सर्व-
मन्त्राक्षरा बीजा सर्वकामप्रदायिनी ॥६॥ वैराजपुत्री
भर्त्री च कुमारी कुशलात्मिका। अचला निष्क्रिया
देवी शिवदूती शिवात्मिका ॥ ७ ॥ हिमविन्ध्या-

द्रिसंस्थाना काशोकाश्मीरसंस्थितिः। योगनिद्रा महानिद्रा विनिद्रा तामसी क्रिया॥८॥ वसुवाणात्मिका गङ्गा महाकामार्थदायिनी। अजया नामपा विद्या महालक्ष्मीः स्मृता सती॥ ९॥ प्रसादैकाक्षरा देवी जीवन्ती जीवमातृका। आसुरी राक्षसी देवी कल्याणी कल्पनाकृतिः॥ १०॥ पञ्चनामात्मिका देवी सप्तनामात्मिका तथा। उद्योता वासनावासा पञ्चाग्निविद्यया युता॥११॥ पञ्चाग्निविद्यया प्रोता सर्वविदेश्वरी मता। भक्तिलभ्या महादेवी न केनापि विशेषिता॥ १२॥ सर्वरक्षामयी काया ऋषिदेवनमस्कृता। अष्टाष्टकमहारूपा प्रत्यक्षादिप्रमात्मिका॥ १३॥ वेदशास्त्रप्रमा देवी मिथ्याप्रपञ्चरूपिका। सत्यप्रपञ्चवादाख्या विशेषा श्लोकरूपिणी॥ १४॥ अधिलोकाधिपज्ञाख्या अध्यात्मा चाधिदेवता। अधिकालाधिसंख्या च पञ्चाख्या पञ्चसंहतिः॥ १५॥ उज्जयिणी कला विद्या चेतना चित्तरञ्जना। एकसंख्या परार्द्धान्तासंख्यासंख्यस्वरूपिणी॥१६॥ समुद्रतोयमध्यस्था व्योम्नि विन्दुसमाश्रिता। वीणा सरस्वती देवी वैणवी वेणुसम्भवा॥ १७॥ वलित्रयसमायुक्ता भारती भरताश्रया। शब्दब्रह्मात्मिका देवी ज्ञानब्रह्मात्मिका परा॥ १८॥ ब्रह्मनाडीचरा

देवी ब्रह्मकैवल्यरूपिणी। कालकेया महातारा म-
होदधिजलाश्रया ॥ १९ ॥ वडवाग्निमुखा देवी यो-
गिनी योगदायिनी। महाभूता महादन्ता महाक्षे-
मप्रदायिनी ॥ २० ॥ पञ्चभूता महाग्रासा पञ्चभूता-
धिदेवता। सर्वप्रणवसम्पूर्तिः सर्वापदनिवारिणी ॥
२१ ॥ ब्रह्माण्डवहिरन्तःस्था वर्णमात्राधिदेवता।
आर्या शिवकरी देवी प्रवरामरहेतुकी ॥ २२ ॥
हेमवाहा शिखाकारा त्रिशिखा पञ्चलोचना। सर्वा-
ङ्गसमुदाचारा मर्य्यादा शरपञ्जरा ॥२३॥ गीता गदा-
र्द्धचन्द्राभा सर्वान्तर्यामिरूपिणी। सामाकारा स्मया
सामा वीरभद्रा कलाश्रया ॥ २४ ॥ जीवेशा च
महातारा तरणिस्तरुणी हिमा। ज्योतिश्चक्रसमावा-
सा वायुमार्गप्रवर्तिनी ॥ २५ ॥ दारिका सर्वभूतस्था
सोमसूर्याग्निसन्निभा। अर्द्धचन्द्रोपमा दंष्ट्रा वह्न्यास्या
वह्निसंस्थिता ॥ २६ ॥ डाकिनी हाकिनी देवी
शाकिनी राकिनी तथा। काकिनी कालिनी चैव
षडाधाराधिदेवता ॥२७॥ सप्तजिह्वा महाजिह्वा महा-
पापप्रभञ्जिनी। महादुर्गा महोत्साहा वलोत्साहाधि-
देवता ॥ २८ ॥ भुवनज्ञानसम्पन्ना भुवनाकारसं-
युता। शाश्वती शाश्वतलोका लोकानुग्रहकारि-
णी ॥ २९ ॥ सारसी मानसी हंसा हंसीलोकप्रदा-

यिनी । योगमुद्राकरद्वन्द्वा भानुकोटिसमप्रभा ॥ ३०
॥ लोकप्राणमहादेवी इष्टिका वज्रधारिणी । सर्वस-
ङ्करदोषघ्नी ग्रहोपद्रवनाशिनी ॥ ३१ ॥ कलिदुःखप्र-
शमनी ग्रहदारिद्र्यभञ्जिनी । सदा शान्ता सदा देवी
गृहे कलहभञ्जिनी ॥ ३२ ॥ महादेवनिवासाख्या
भाविनी भाविता शिवा । गौणलक्षणकी मुख्या
जघन्यवृत्तिवर्ज्जिता ॥ ३३ ॥ वास्तवी वृतिरूपा सापे-
क्षरूपा परिच्छिदा । छन्दा स्वच्छन्दरूपा सा मन्त्रा स्व-
च्छन्दरूपिणी ॥ ३४ ॥ नरमाला नरत्रासा निःशेषग्रा-
सरूपिणी । सदानन्दा सदाकारा निष्प्रपञ्चा निरा-
श्रया ॥ ३५ ॥ सत्या सत्परमा रामा रमणी मृत्युभ-
ञ्जिनी । ज्येष्ठा कनिष्ठान्ता देवी वलिगार्गिगुणप्रिया
॥ ३६ ॥ मैत्रेयी मित्रविदर्थार्था शेषाशेषफणाश्रया ।
वाराणस्यासिता देवी मृत्युस्तत्रैव गच्छति ? ॥३७॥
अन्तर्वहिर्वाराणसीदायिनी दानशालिनी । सर्वाज्ञा-
नमयी देवी सत्यज्ञानमयी शुभा ॥ ३८ ॥ उत्पत्ति-
स्थितिसंहारहेतुकी जगतामिति । नमस्ते ऽस्तु
महालक्ष्मि नमस्ते परमेश्वरि ॥ ३९ ॥ नमस्ते सर्व-
लोकानां मातर्नित्ये शिवे ऽव्यये । सर्वज्ञे सर्वजन-
नि सर्वशक्तिस्वरूपिणी ॥ ४० ॥ सिद्धिलक्ष्मि महा-
कालि महालक्ष्मि नमो ऽस्तु ते । भक्तानुग्राहिके

देवि करुणासागराम्बिके ॥ ४१ ॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमोऽस्तु ते । सद्योजातादि पञ्चाग्निरूपे पञ्चकपञ्चके ॥ ४२ ॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमोऽस्तु ते । सिद्धज्ञानमये देवि पञ्चेन्द्रियविवर्जिते ॥४३॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमोऽस्तु ते । स्वयंप्रकाशे नित्याख्ये प्रकाशे कामरूपिणि ॥४४॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमोऽस्तु ते । सत्यज्ञानमये देवि नित्यानन्दे सदाशिवे ॥ ४५ ॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमोऽस्तु ते । सृष्ट्यादिकारिणि देवि ह्युत्पत्त्यादिप्रभेदतः ॥ ४६ ॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमोऽस्तु ते । शाकम्भरि वैष्णवि च ब्राह्मि च प्रकृतीश्वरि ॥४७॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमोऽस्तु ते । अविद्यापटलध्वंसे विद्याद्वयविशेषिते ॥४८॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमोऽस्तु ते । सद्योजाते वामघोरे पुरुषेशानरूपिणि ॥ ४९ ॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमोऽस्तु ते । अष्टादशकभेदेशे वैष्णवि लोकधारिणि ॥५०॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमोऽस्तु ते । नवकोटिप्रभेदेशे चामुण्डे परमेश्वरि ॥ ५१ ॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमो-

ऽस्तु ते । अनन्तकोटिभेदेशे ब्राह्मीत्येव प्रकीर्तिते ॥
५२ ॥ सिद्धिलक्ष्मि महाकालि महलक्ष्मि नमो-
ऽस्तु ते । मातलिङ्गं गदां खेटं पानपात्रं च बिभ्रति
॥ ५३ ॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमो
ऽस्तु ते । नागलिङ्गं च योनिं च बिभ्रति परमेश्वरि
॥ ५४ ॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमो-
ऽस्तु ते । लक्ष्यालक्ष्यस्वरूपेण व्याप्य कृत्स्नं व्यव-
स्थिते ॥ ५५ ॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि
नमोऽस्तु ते । सर्वमङ्गलमाङ्गल्ये शिवे नारायणप्रिये
॥ ५६ ॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमो-
ऽस्तु ते । उमे देवि नमस्ते ऽस्तु देवि प्रणवसंज्ञिके
॥ ५७ ॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमो-
ऽस्तु ते । दुष्टविद्राविणि देवि दुष्टदारिद्रभञ्जिनि ॥
५८ ॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमो-
ऽस्तु ते । सर्वसङ्करदोषघ्नि सर्वापत्तिनिवारिणि ॥
५९ ॥ सिद्धिलक्ष्मि महाकालि महालक्ष्मि नमो
ऽस्तु ते । सनत्कुमार उवाच । एवं स्तुत्वा महाल-
क्ष्मीं श्रीसूक्तेनापि चास्तुवन् ॥ ६० ॥ हिरण्यवर्णा-
मित्यादि श्रीसूक्तमिति संहितम् । एवं स्तुता महा-
लक्ष्मीर्ब्रह्मविष्णुमहेश्वरैः ॥ ६१ ॥ प्राह गम्भीरया
वाचा दर्शयन्ती स्वकां तनुम् । श्रीमहालक्ष्मीरुवा-

च । शृणुध्वं देवदेवेशा ब्रह्मविष्णुमहेश्वराः ॥ ६२ ॥
वरं ददामि तुष्टाहं इच्छा मनसि वर्त्तते । देवा
ऊचुः । आप्तं सर्वं पुरास्माभिस्त्वजरैश्च सुरेश्वरि ॥
६३ ॥ उत्पत्तिस्थितिसंहारहेतुकं शक्तिरूपकम् ।
अभिन्नरूपतास्माकमीश्वरेण त्वया पुरा ॥ ६४ ॥
उत्पत्तिस्थितिसंहारहेतुको भेद आश्रितः । यथा
पूर्वं वरो ऽस्माकमीश्वराभेदलक्षणम् ॥ ६५ ॥ त-
देवास्तु महालक्ष्मि किमन्येन वरेण नः । पठतां
शृण्वतां स्तोत्रं वरमेतं प्रयच्छ भोः ॥ ६६ ॥ दुष्ट-
विद्रावणं देवि दुःखदारिद्राभञ्जिनि । आयुष्यं च
तथारोग्यं सर्वोपद्रवनाशिनि ॥ ६७ ॥ अणिमादि-
गुणैश्वर्यं जातिस्मरणमेव च । वाराणस्यां स्मृतिश्चैव
स्वच्छन्दमरणं तथा ॥६८॥ स्वपरायुष्यमर्य्यादो वै-
राग्यपदवी तथा । इषणात्रयनिर्मुक्तिः साम्राज्य-
पदवी तथा ॥ ६९ ॥ सर्वज्ञत्वं तथा भक्तिर्वीतराग-
त्वमेव च । किमत्र वहुनोक्तेन तारकं ब्रह्मसंज्ञकम्
॥ ७० ॥ उपदेशे शिवे देवि प्रसादं कर्तुमर्हसि ।
सनत्कुमार उवाच । नाम्नामष्टसहस्रं तु जपध्वं सर्व-
कामदम् ॥ ७१ ॥ अपि पूज्यं महाभागा योगिनः
शान्तमानसाः । एवमस्त्विति मा उक्त्वा कन-
काम्बरभूषणा ॥ ७२ ॥ क्षणादन्तर्हिता देवत्रयाणा-

मपि पश्यताम् । गार्ग्य उवाच । तस्मात् यूयं महाभागा ऋषयः सर्वकाङ्क्षिणः ॥७३॥ जपध्वं नामसाहस्रं सर्वान् कामानवाप्स्यथ। एवमुक्त्वा तु योगीन्द्रः सनत्कुमार ईश्वरः ॥ ७४ ॥ क्षणादन्तर्हितो देवः सर्वेषामेव पश्यताम् । अष्टम्यां च चतुर्दश्यां नवम्यां च व्रते स्थितः ॥७५॥ पौर्णमस्याममायां वा विशेषेण प्रकीर्तयेत् । सर्वान्कामानवाप्नोति पुस्तकं चापि पूजयेत् ॥ ७६ ॥ पाठकान् ग्राहयेद्यश्च सदा सिद्धिमवाप्नुयात् । कुले न जायते तस्य दारिद्र्यं कलहावहम् ॥ ७७ ॥ महापातकजान् दोषान्सर्वान् व्याधींश्चनाशयेत्। वहुलां श्रियमाप्नोति साधकः पुण्यहेतुकाम् ॥ ७८ ॥ इत्याह भगवान् गार्ग्य ऋषिभ्यः स्तोत्रमुत्तमम् । महालक्ष्म्या महादेव्या नाम्नामष्टसहस्रकम् ॥ ७९ ॥ सप्तजन्मसु दारिद्र्यं स्तोत्रपाठाद्विनश्यति। यस्येदं तिष्ठते गेहे पुस्तकं लक्ष्मिरूपकम् ॥ ८० ॥ न तत्राग्निभयो घोरः सर्वरोगादिसम्भवः । यश्चैतां पूजयेद्भक्त्या पुस्तकेऽपि यथाविधि ॥ ८१ ॥ तेन तुष्टं भवेन्नित्यं त्रैलोक्यं सचराचरम् । जायन्ते वहवः पुत्रा धनधान्यवरस्त्रियः ॥८२॥ रत्नान्यश्वगजास्तेषां सर्वाण्याशु भवन्ति हि । इति श्रीमहालक्ष्मीसहस्रनामस्तोत्रं सम्पूर्णम् ॥ ८३ ॥

श्रीगणेशाय नमः ।

# अथ महासरस्वतीपञ्चाङ्गम् ।



श्रीदेव्युवाच । भगवन् सर्वतत्त्वज्ञ साधकानां जयावह । यत् पुरा सूचितं देव वाणीपञ्चाङ्गमुत्तमम् ॥१॥ सर्वस्वं सर्वदेवानां रहस्यं सर्वमन्त्रिणाम् । तदद्य कृपया ब्रूहि यद्यस्ति मयि ते दया ॥ २॥ श्रीभैरव उवाच । शृणु देवि प्रवक्ष्यामि वाणीपटलमीश्वरि । यस्य श्रवणमात्रेण भवेत् सिद्धिः कलौ नृणाम् ॥३॥ सर्वस्वं सर्वमन्त्राणां न कस्य कथितं मया । तव स्नेहात् प्रवक्ष्यामि वाणीपटलमुत्तमम् ॥ ४ ॥ गोप्यं गुप्ततरं देवि न देयं यस्य कस्यचित् । या देवीति महामाया सरस्वती महेश्वरी ॥ ५ ॥ देवैराराधिता सर्वैः ब्रह्माच्युतपुरस्सरैः । एकादशाक्षरी नित्या संख्यातीता परात्मिका ॥ ६ ॥ तस्यास्तु पटलं दिव्यं रहस्यं त्रिदिवौकसाम् । वक्ष्यामि परमप्रीत्या न चाख्येयं दुरात्मने ॥ ७ ॥ अधुना शृणु वक्ष्यामि मन्त्रोद्धारं पराश्रयम् । सर्वतन्त्रेषु विख्यातं सर्वसारस्वतप्रदम् ॥ ८ ॥ अथ मन्त्रोद्धारः । तारो माया च

वाग्बीजं परा तारो महेश्वरि। सरस्वत्यै जगन्मन्त्रः प्रसिद्धो ऽयं शिवाक्षरः ॥९॥ इत्युद्धारः(१)। नास्यान्तरायबाहुल्यं नापि मित्रारिदूषणम्। नो वा प्रयाससंयोगो नाचारयुगविप्लवः ॥ १० ॥ साक्षात् सिद्धिप्रदो मन्त्रो श्रोत्राण्याः कलिनाशनः। रुद्राक्षरो ऽष्टसिद्धीशो गोपनीयो मुमुक्षुभिः ॥ ११ ॥ महाचीनक्रमस्थानां साधकानां जयावहः। मन्त्रराजो महादेवि सदो भोगापवर्गदः ॥ १२ ॥ वर्णलक्षं पुरश्चर्या तदर्धं वा महेश्वरि। एकलक्षावधिं कुर्यान्नातो न्यूनं क...

(१) निबन्धे तु वागीश्वरीमन्त्र एवमुक्तः। अद्रिर्वरुणसंरुद्धो वदवाग्वादिनि ठद्वयम् ॥ सरस्वत्या दशार्णो ऽयं वागैश्वर्य्यफलप्रदः। (वद वद वाग्वादिनि स्वाहा)। मन्त्रान्तरम्। हृदयान्ते भगवती वदशब्दयुगं ततः। वाग्देवि वह्निजायान्तं वाग्भवाद्यं समुद्धरेत्। मनुः षोडशवर्णाढ्यो वागैश्वर्यफलप्रदः। (ऐं नमो भगवति वदवद वाग्देवि स्वाहा)। मन्त्रान्तरम्। तारो मायाधरो बिन्दुः शक्तिस्तारः सरस्वती। ङेऽन्तानत्यन्तको मन्त्रः प्रोक्त एकादशाक्षरः ॥ (ओं ह्रीं ऐं ह्रीं ओं सरस्वत्यै नमः।) मन्त्रान्तरं शारदायाम्। वाचस्पतेऽमृते भूयः प्लवः प्लुरिति कीर्त्तयेत्। वागाद्यो मनुराख्यातः रुद्रसंख्याक्षरो मनुः ॥ (ऐं वाचस्पते अमृते प्लव प्लुः) पारिजातसरस्वतीमन्त्रः मन्त्रदेवप्रकाशिकायामुक्तः। प्रणवहृल्लेखासम्पुटितहकारसकारैकारबिन्दुयुक्तसरस्वतीङेन्तानतिश्च। दक्षिणामूर्त्तिसंहितायां तु। सम्पत्प्रदाया भैरव्या वाग्भवं बीजमालिखेत्। तारेण परया देवि सम्पुटीकृत्य मन्त्रवित्। सरस्वत्यै हृदन्तोऽयं रुद्राणों मनुरीरित इति।

चन ॥ १३ ॥ मूलोत्कीलनसिद्धिं तु सञ्जीवनसुसं-
स्कृतम् । पुरश्चर्यां चरेत् पश्चात् सम्पुटाख्यं चरेन्मनु-
म्॥१४॥ ततो मन्त्रं जपेन्नित्यं सरस्वत्याः शुभप्रदम् ।
यं जप्त्वा साधको देवि विचरेद्भैरवो यथा ॥ १५ ॥
ऋषिरस्य स्मृतो देवि मन्त्रस्यादौ प्रजापतिः । छन्दो
ऽनुष्टुप् देवता च श्रीवाणी रुद्रवर्णका ॥ १६ ॥ तार
बीजं महेशानि मायाशक्तिरिति स्मृता । वाणीकी-
लकमीशत्वे विनियोगः प्रकीर्तितः ॥ १७ ॥ वाणीं
पूर्णनिशाकरोज्ज्वलमुखीं कर्पूरकुन्दप्रभाम् चन्द्रा-
र्धाङ्कितमस्तकां निजकरैः संबिभ्रतीमादरात् । वी-
णामक्षगुणं सुधाढ्यकलशं विद्यां च तुङ्गस्तनीं दि-
व्यैराभरणैर्विभूषिततनुं सिंहाधिरूढां भजे ॥ १८ ॥
अथ वक्ष्यामि तत्त्वं ते यन्त्रोद्धारं महेश्वरि । सरस्व-
त्याः कौलिकानां भुक्तिमुक्तिफलप्रदम् ॥ १९ ॥ त्रि-
कोणं च विन्दुं ततः षट्सुकोणं सुवृत्तं ततो नाग-
पत्रं त्रिवृत्तम् । धरामन्दिरं वन्हिरेखोज्ज्वलन्तं म-
योक्तं हि सारस्वतं यन्त्रमेतत्(१) ॥२०॥ लयाङ्गमस्य

(१) अस्य यन्त्रमन्यत्रोक्तं यथा । व्योमेन्दौ रसनार्णकर्णिकमठो द्वन्द्वैः स्फुरत्केशरं पत्त्रान्तर्गतपञ्चवर्गयशनार्णादित्रिवर्गैः क्रमात् । आसास्वश्रिषु लान्तलाङ्गलियुजा क्षौणीपुरेणावृतं यन्त्रं वर्णतनोः परं निगदितं सर्वार्थसिद्धिप्रदम् ॥ गौतमीये । कर्णिकायां प्रेतबीजं विधिना विलिखेद्गुरुः । ततः षोडशकेशरेषु लिखेत् षोडशस्वरान् ॥

यन्त्रस्य सर्वतन्त्रेषु गोपितम् । येनोच्चारणमात्रेण कोटियज्ञफलं लभेत् ॥ २१ ॥ गणेशं धर्मराजं च बटुकं च कुवेरकम् । चतुर्द्वारेषु देवेशि पूजयेत् सिद्ध-केश्वरम् ॥ २२ ॥ इन्द्रमग्निं धर्मराजं निर्ऋतिं वरुणं तथा । वायुं कुवेरमीशानं त्रिरेखासु प्रपूजयेत् ॥२३॥ श्रीगुरुं परम चैव परापरगुरुं तथा । तत्रैव पूजयेद्दे-वि साधको मन्त्रसिद्धिभाक् ॥ २४ ॥ असिताङ्गो रुरुश्चण्डः क्रोधोन्मत्तः कपालकः । भीषणश्चैव सं-हारो वामावर्त्तेन साधकैः ॥ २५ ॥ पूज्याः पृथक् पथक् देवि गन्धपुष्पाक्षतैः शिवे । नागपत्रे च देवे-शि पूजयेत् साधकस्तथा ॥ २६ ॥ वाग्देवीं चैव वा-गीशां सरस्वतीं महेश्वरीम् । तथानलप्रियां देवि वे-णां वीणामुखीं तथा ॥ २७ ॥ विद्याधरां ततो देवि पूजयेन्नागपत्रके । अम्बालिकाम्बाबगलाच्छिन्नशीर्षा-म्बिकाभगाः ॥२८॥ पूजयेत् पद्मकिञ्जल्कैः षट् च च-न्द्रकुलाम्बिकाः । पुनः पुष्पाञ्जलिं दत्त्वा श्रीचक्रे पर-मार्थदे ॥२९॥ पूजयेद्देवतास्तिस्रः ईशानादिक्रमेण तु । कालिका त्रिपुरा दुर्गा पूजनीया त्रिकोणके ॥ ३० ॥

---

तथाष्टदलमध्ये च वर्णाष्टकं यथाविधि । कादिमान्ताः पञ्चपञ्चवर्गाः स्युर्मातृकोदिताः ॥ यादिवान्ताः शादिहान्ताः लक्षमीशे प्रविन्यसेत् । चतुरस्रं चतुर्द्वारं विदिक्षु वं ठं विदिक् च । इति ॥

ततः सरस्वतीं देवीं रुद्रवर्णात्मिकां शिवे । श्रीब्रह्मा-
णं शिवं विन्दौ पूजयेज्जगदम्बिकाम् ॥ ३१ ॥ तत्रा
युधानि देवेशि पूजयेत् साधकोत्तमः । वीणामक्षगुणं
चैव सुधाढ्यकलशं तथा ॥ ३२ ॥ पुस्तकं चैव देवेशि
नानापुष्पैः समर्च्चयेत् । देवदेव्योः विन्दुपीठे पूजयेत्
सर्वसिद्धये ॥ ३३ ॥ अथ वक्ष्ये महादेवि प्रयोगानष्ट
सिद्धये । यान् विधाय कलौ मन्त्री भवेत् कल्पद्रुमो-
पमः ॥३४॥ स्तम्भनं मोहनं चैव मारणाकर्षणे त-
तः । वशीकारं तथोच्चाटं शान्तिकं पौष्टिकं ततः ॥
३५ ॥ एषां साधनमावक्ष्ये प्रयोगानां महेश्वरि ।
अयुतं तु जपेन्मूलं श्मशाने निशि साधकः ॥ ३६ ॥
हुनेद्दशांशतःसर्पिर्यवान्माषास्तुगुक्षितान् । स्तम्भनं
जायते क्षिप्रं रिपूणां वादिनां तथा ॥ ३७ ॥ अयुतं
प्रजपेत् देवि वटे रुद्राक्षमालया । होमो दशांशतः
कार्यो सर्पिः पद्माक्षपङ्कजैः ॥ ३८ ॥ आरग्वधैः सु-
धामूलैर्मोहनं जायते क्षणात् । देवानां दानवानां च
मानवानां च का कथा ॥ ३९ ॥ अरण्ये च गतो मूलं
प्रजपेत् साधकोत्तमः । हुनेत् दशांशतः सर्पिः रिपु-
र्मृत्युमुखं व्रजेत् ॥ ४० ॥ अयुतं प्रजपेद्रात्रौ शून्या-
गारे हुनेत् घृतम् । दशांशतः श्च होतव्यं भवेदाकर्ष-
णं स्त्रियः ॥ ४१ ॥ चत्वरे प्रजपेन्मूलं हुनेदाज्या-

जरक्तकैः। शक्रोऽपि वसतां याति किं पुनः क्षूद्रभूमिपः ॥ ४२ ॥ अयुतं प्रजपेन्मूलं साधकोऽश्वत्थमूलके। घृतं हुनेत् दशांशेन कोशाक्षीणां त्वचं कणान्॥ ४३ ॥ रिपुमुच्चाटयेच्छीघ्रं परिशक्रसमो भवेत्। कल्पमूलायुतं जप्त्वा घृताक्तान् कुक्कुटाण्डकान् ॥ ४४॥ रोगोपद्रवशान्तिस्तु क्षणादेव भविष्यति। अयुतं प्रजपेन्मूलं क्लीं ऐं वनमध्यगः ॥ ४५ ॥ होमो दशांशतः कार्यो घृतमोनाज्यमुस्तकैः। पादैरष्टाभिरीशानि सदाः पुष्टिः प्रजायते ॥ ४६ ॥ इत्येष पटलो दिव्यो मन्त्रः सर्वस्वरूपवान्। वाणीरहस्यभूतोऽपि गोपनीयो मुमुक्षुभिः ॥ ४७ ॥

इतिश्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये भैरवीभैरवसंवादे सरस्वतीपटलः समाप्तः ॥

### अथ सरस्वतीपूजापद्धतिः।

अधुना पद्धतिं वक्ष्ये सरस्वत्यर्चने शिवे। गदापदामयीं गोप्यां सकलागमनिश्चिताम् ॥ प्रातःकृत्यमकृत्वा तु यो देवीं भक्तितोऽर्चयेत्। तस्य पूजा तु विफला शौचहीना यथा क्रिया ॥ ब्राह्मे मुहूर्ते उत्थाय बद्धपद्मासनः स्वशिरःस्थसहस्राराधोमुखकमलकर्णिकान्तर्गतं निजगुरुं ध्यात्वा मानसैरुप-

चारैः सम्पूज्य योनिमुद्रया प्रणमेत् ॥ तत्र मूला-धारस्थकुण्डलिनीं प्रसुप्तभुजगाकारां तडित्कोटिनि-भां प्रदीपशिखाकृतिं हंस इतिमन्त्रेण सचेतनां वि-धाय मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञा-नचक्राणि षड्भित्वा सुषुम्नामार्गेण तां कुण्डलिनीं प्रसुप्तभुजगाकारां तडित्कोटिनिभां प्रदीपशिखाकृतिं द्वादशान्तस्य सहस्रदलकर्णिकान्तर्गतं परममपि चि-न्तयेत्(१) ततो मूलविद्यां यथाशक्ति जप्त्वा समर्प्य प्रार्थयेत् । त्रैलोक्यचैतन्यमयाधिदेवि चैतन्यशक्ते भवदाज्ञयैव । प्रातः समुत्थाय तव प्रियार्थं संसार-यात्रामनुवर्तयिष्ये ॥ जानामि धर्मं न च मे प्रवृत्ति-र्जानाम्यधर्मं न च मे निवृत्तिः । त्वया हृषीकेशहृ-दिस्थयाहं यथा नियुक्तोऽस्मि तथा करोमि ॥ इति सम्प्रार्थ्य भूमौ पादं दत्त्वा प्रार्थयेत् । समुद्रमेखले देवि पर्वतस्तनमण्डले । विष्णुपत्नि नमस्तुभ्यं पाद-स्पर्शं क्षमस्व मे ॥ यथाविधि शौचादिकं कृत्वा मूले-न मुखं प्रक्षाल्य देवतागुरुनामादि स्मृत्वा स्नातुं या-

(१) तदुक्तम् । ध्यायेत् कुण्डलिनीं सूक्ष्मां मूलाधारनिवासिनीम् । तामिष्टदेवतारूपां सार्द्धत्रिवलयान्विताम् ॥ कोटिसौदामनीभासां स्वयम्भूलिङ्गवेष्टिनीम् । तामुत्थाप्य महादेवीं प्राणमन्त्रेण साधकः ॥ उद्यद्दिनकरद्योतां यावच्छ्वासं दृढासनः । अशेषाशुभशान्त्यर्थं समाहितमना भवेत् ॥ तत्प्रभापटलव्याप्तं शरीरमपि चिन्तयेत् । इति ॥

यात् नद्यादौ गत्वा हस्तौ पादौ प्रक्षाल्यातः स्नानं कुर्यात् ॥ यथाकोटिप्रतीकाशं निजभूषायुधैर्युतम् । शिरःस्थं तत्स्मरेद्देवं तत्पादोदकधारया ॥ १ ॥ विशन्त्या ब्रह्मरन्ध्रेण निजदेहं विशुद्धया । पक्षाल्यान्तरतिं पापं विरजो जायते नरः । ततः स्वशाखोक्तस्नानं कृत्वा ततोऽन्तर्जले अघमर्षणसूक्तं जपेत् ततो मन्त्रस्नानं कुर्यात् आचम्य प्रणवेन प्राणायामं कृत्वा ऋष्यादिषडङ्गं विधाय अङ्कुशमुद्रया आदित्यमण्डलात् तीर्थानि आवाहयेत् ब्रह्माण्डोदरतीर्थानि करैःस्पृष्टानि वै रवे ॥ तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिन्धुकावेरि जले ऽस्मिन् सन्निधिं कुरु ॥ गायत्र्या त्रिवारं भूमौ जलं निक्षिप्य सप्तधा जलेन मूर्द्धानमभिषिञ्च्य ततो वमितिबीजेन द्वादशवारं जलं अभिमन्त्र्य ओं अद्येत्यादि-अमुकगोत्रोऽहं अमुकदेवशर्मा सकलपापक्षयार्थं श्रीष्टदेवताप्रीत्यर्थंस्नानमहं करिष्ये इति सङ्कल्प्य मूलोच्चारणपूर्वकं त्रिर्निमज्ज्योन्मज्ज्य सप्तवारं कलसमुद्रया स्वशिरसि जलं सिञ्चेत् त्रिवारं गायत्र्या तनुं सिञ्चेत् संक्षेपेण देवादींस्तर्पयेत् ओंदेवांस्तर्पयामि ओं ऋषींस्तर्पयामि ओं पितॄंस्तर्पयामि ओं गुरूंस्तर्पयामि ओं

परमगुरूं स्तर्पयामि ओं परापरगुरूं स्तर्पयामि ओं परमेष्ठीगुरूं स्तर्पयामि ततो जलादुत्थाय वस्त्रं सम्पीड्य सङ्क्षाल्य धौतवस्त्रं परिधाय आचम्य गायत्र्या शिखां बद्ध्वा पीठस्थाग्निहोत्रोत्थितं भस्म गोपीचन्दनं वा तेन तिलकं दत्त्वा स्वशाखोक्तां प्रातःसन्ध्यां कुर्यात् ततो मन्त्रसन्ध्यां कुर्यात् तद्यथा ऋष्यादिषडङ्गन्यासं कृत्वा वामहस्ते जलं निधाय दक्षहस्तेनाच्छाद्य हं यं वं लं रं इत्यभिमन्त्र्य मूलमुच्चरन् गलितोदकबिन्दुभिस्तत्त्वमुद्रया मूर्द्ध्नि सप्तधाभ्युक्षणं कृत्वा शेषं जलं दक्षिणहस्ते समादाय तेजोरूपं ध्यात्वा ईडयाकृष्य पापं प्रक्षाल्य कृष्णवर्णं तज्जलं पापरूपं ध्यात्वा पिङ्गलया विरेच्य पुरःकल्पितवज्रशिलायां फडितिमन्त्रेण पापपुरुषस्वरूपं तज्जलं ताडयेत् इत्यघमर्षणं कृत्वा अञ्जलिना जलमादाय सूर्यमण्डलस्थायै श्रीसावित्र्यै अर्घ्यं समर्पयामि नमः इत्यर्घ्यं दत्त्वा गायत्रीं जपेत् अष्टोत्तरशतं जप्त्वा जपान्ते नैवेद्यतर्पणं कुर्यात् जले पद्मं विभाव्य देवीमावाहयेत् जलमयैरुपचारैः सम्पूज्य गायत्र्यन्ते सावित्रीं तर्पयामि नमः इत्यष्टाविंशतिवारं षोडशवारं वा सन्तर्प्य पूजाक्रमेण आवरणदेवतां तर्पयेत् अशक्तः मूलेन सन्तर्प्य षडङ्गं तर्पयेत् ततो ह्रीं हंसः इत्यनेन सूर्याय अर्घ्यं दत्त्वा संहारमुद्रया देव-

तीर्थं च विसृज्य नमस्कृत्य जलमादाय स्वपाददृष्टिः देवीं स्मरन् पूजागृहमागत्य हस्तौ पादौ प्रक्षाल्याचम्य सामान्यार्घ्यं संस्थाप्य मूलेनापूर्य मूलेन गन्धपुष्पाभ्यां सम्पूज्य धेनुमुद्रां प्रदर्श्य मूलेनाष्टकमभिमन्त्र्य तेनोदकेन द्वारोर्द्ध्वं गं गणपतये नमः दक्षवामशाखयोः महालक्ष्म्यै नमः सरस्वत्यै नमः गङ्गायै नमः यमुनायै नमः धात्रे नमः विधात्रे नमः शङ्खनिधये नमः पद्मनिधये नमः देहल्यां फट् नमः अशक्तः ऊर्द्ध्वं गणेशं सम्पूज्य द्वारपालेभ्यो नमः इति सम्पूजयेत् ततो वामाङ्गसङ्कोचनपूर्वकं दक्षपादपुरःसरं मण्डपान्तः प्रविश्य नैरृते क्षेत्रपालाय नमः विधात्रे नमः अनन्तासनाय नमः पद्मासनाय नमः विमलासनाय नमः इति। आसनं निधाय आसनोपरि हस्तं दत्त्वा आसनमन्त्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्म्मो देवता आसनस्थापने(१) विनियोगः ओं पृथ्वि त्वया धृता लोका देवि त्वं विष्णु ना धृता। त्वं च धारय मां देवि(२) पवित्रं कुरु चासनम्। इत्यासनं सम्पूज्य उपविश्य दिव्यदृष्ट्या दिव्यान् विघ्नानुत्सारयेत् पार्ष्णिघातत्रयेण भौमान् विघ्नानुत्सारयेत्

(१) आसनोपवेशने इतिपाठान्तरम्।

(२) नित्यमिति पाठान्तरम्।

तालत्रयं कृत्वा अस्त्राय फडिति अन्तरीक्षगान् विघ्नानुत्सारयेत् । ओं अपसर्पन्तु ते भूताः ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो-दिशम् ॥ सर्वेषामविरोधेन ब्रह्मकर्म समारभे इति विघ्नानुत्सार्य तत आसने स्वस्तिकपद्मवीरासन उप-विश्य ओं आत्मतत्त्वाय स्वाहा ओं विद्यातत्त्वाय स्वाहा ओं शिवतत्त्वाय स्वाहा । इत्याचम्य करसम्पुटं कृत्वा वामे गुरुभ्यो नमः परमगुरुभ्यो नमः परापर-गुरुभ्यो नमः परमेष्ठीगुरुभ्यो नमः दक्षे गं गणपतये नमः अग्रे श्रीसावित्र्यै नमः इति नमस्कृत्य भूतशुद्धिं कुर्यात् देव्यर्च्चयोग्यतामाप्तये भूतशुद्धिमहं करिष्ये इति सङ्कल्प्य मूलाधारे कुण्डलिनीं सार्द्धत्रिवलयोपेतां विषतन्तुनिभां ध्यात्वा हुं बीजेन उत्थाप्य हृदयमा-नीय प्रदीपकलिकाकारं जीवं गृहीत्वा हंसइतिमन्त्रेण ब्रह्मणि संयोज्य पादादिजान्वन्तं पृथ्वीं विभाव्य जा-न्वादिनाभ्यन्तं जलं नाभ्यादि हृदयान्तं वह्निं हृद-यादिभ्रूमध्यान्तं वायुं भ्रमध्यादिमस्तकान्तं आका-शं विभाव्य भुवं जले जलं वह्नौ वह्निं वायौ वायु-माकाशे आकाशं वियदहङ्कारे अहङ्कारं महत्तत्त्वे महत्तत्वं प्रकृतौ प्रकृतिं आत्मनि विलाप्य ब्रह्ममयो

भूत्वा दक्षकुक्षौ अतद्दासनात्मकं पापपुरुषं ध्यात्वा वामनासया यं इति वायुबीजेन द्वात्रिंशद्वारं वायुमापूर्य चतुःषष्टिवारं कुम्भयित्वा षोडशवारं रेचयेत् तेन पापपुरुषं शुष्कं विभाव्य पुनः रं बीजेन पूरककुम्भकरेचकं यथासंख्यं कृत्वा तेन पापं सन्दह्य पुनः यं बीजेन यथासंख्यं पूरकादिकं विधाय देहं दृढं विचिन्त्य जठरे यं नमः हृदि रं नमः दक्षांसे लं नमः ककुदि वं नमः वामांसे शं नमः हृदयादिदक्षवाहौ षं नमः हृदादिवामवाहौ सं नमः हृदादिदक्षपादाग्रान्तम्। हं नमः। हृदादिवामपादाग्रान्तम्। लं नमः। हृदादिशिरःपर्यन्तम्। क्षं नमः। शिरसः पादपर्यन्तमितिमातृकान्यासः इत्येवं न्यासं विधाय सरस्वतीं देवीं ध्यात्वा भूतशुद्धिं कुर्यात् ओं ह्रीं इत्याधारात् कुण्डलिनीं प्रदीपकलिकाकारां सुषुम्णामार्गेण ब्रह्मपर्यन्तं यथाऽन्तर्नीत्वा परमशिवं प्रापयित्वा तयोः सामरस्यं विभाव्य तत्तद्भूतानन्दामृतधारया कुलगुरून् सन्तर्प्य पुनः षट्चक्रं भित्वा स्वस्थानमानीय वामकुक्षौ पापपुरुषमङ्गुष्ठमात्राकारं कृष्णवर्णं रक्तश्मश्रुलं ध्यात्वा प्राणायामयोगेन शोषणादि कुर्यात् रमिति अग्निबीजेन षोडशवारजप्तेन दाहयेत् वमितिवरुणबीजेन षोडशवारजप्तेन लमि-

तिभूवीजेन षोडशधा जप्तेन सात्मानं देहमुत्पाद्य प्राणप्रतिष्ठां कुर्य्यादितिभूतशुद्धिः ओं ह्रीं आं क्रों सोहं हंसः मम प्राणा इह प्राणाः। मम जीव इह स्थितः। मम वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इतिप्राणप्रतिष्ठां विधाय पूर्ववत् प्राणायामं कृत्वा कमलारूपं स्वात्मानं विचिन्त्य हृत्कर्णिकायां ब्रह्माङ्कगतां श्रीसरस्वतीं विचिन्त्य मानसैरुपचारैः सम्पूज्य श्रीचक्रं विभाव्य प्रक्षाल्य वा योगपीठोपरि संस्थाप्य योगपीठपूजां कुर्यात् ओं ह्रीं मण्डूकाय नमः ओं ह्रीं कालाग्निरुद्राय नमः ओं ह्रीं मूलप्रकृत्यै नमः ओं ह्रीं आधारशक्तये नमः ओं ह्रीं अनन्ताय नमः ओं ह्रीं पृथिव्यै नमः ओं ह्रीं सुधार्णवाय नमः॥ मध्ये। ओं ह्रीं स्वर्णद्वीपाय नमः ओं ह्रीं कल्पवनाय नमः। पूरककुम्भकरेचकं यथासंख्यं कृत्वा तेन पापं सन्दह्य पुनः वं बीजेन यथासंख्यं पूरककुम्भकरेचकं कृत्वा तेन ललाटचन्द्रादमृतवृष्टिं निपात्य लं बीजेन प्राणायामं कृत्वा अमृतं घनीकृत्य हं बीजेन प्राणायामं कृत्वा तेन आपादमस्तकान्तं शरीरमुत्पाद्य कुण्डलिनीं ब्रह्मणः सकाशात् निर्गम्य सोहं मन्त्रेण हृदि जीवं निधाय मूलाधारगतां ध्यायेत् इतिभूतशुद्धिः ॥

अशक्तः लं वं रं यं हं इति हृदि हस्तं दत्त्वा त्रिः पठेत्॥ अथ प्राणप्रतिष्ठामन्त्रस्य ब्रह्मादया ऋषयः ऋगादीनि च्छन्दांसि प्राणशक्तिर्देवता आं बीजं ह्रींशक्तिः क्रीं-कीलकं प्राणस्थापने विनियोगः। ब्रह्मविष्णुमहेश्वरे-भ्यः ऋषये नमः शिरसि। ऋग्यजुःसामच्छन्दो-भ्योनमः मुखे प्राणशक्तिदेवतायै नमः हृदये आं बीजाय नमः गुह्ये ह्रीं शक्तये नमः पादयोः क्रीं कील-काय नमः नाभौ करसम्पुटं कृत्वा॥ अथ षडङ्गानि आं हृदयाय नमः ह्रीं शिरसे स्वाहा क्रौं शिखायै वषट् आं कवचाय हुं ह्रीं नेत्रत्रयाय वौषट् क्रौं अ-स्त्राय फडितिदिग्बन्धनं कृत्वा ध्यायेत् रक्ताब्धि-पोतारुणपद्मसंस्थां पाशाङ्कुशाविक्षुशरा स्चिवाणाम्॥ शूलं कपालं दधतीं कराग्रैः रक्तां त्रिनेत्रां प्रणमामि देवीम्॥ इति ध्यात्वा हृदि हस्तं दत्त्वा मन्त्रं त्रिः पठेत् ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हों हंसः मम प्राणा इह प्राणाः ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हों हंसः मम जीव इह स्थितः ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हों हंसः मम सर्वेन्द्रियाणि इह स्थितानि ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हों हंसः मम वाङ्मनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा अशक्तः आं ह्रीं क्रों इति

त्रिः पठेत् । अथ मातृकान्यासः । अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः । इं चं छं जं झं ञं ईं तर्जनीभ्यां स्वाहा । उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट् । एं तं थं दं धं नं ऐं अनामिकाभ्यां हुं । ओं पं फं बं भं मं औं कणिष्ठाभ्यां वौषट् । अं यं रं लं वं शं षं सं हं लं क्षं अः अस्त्राय फट् । अं कं खं गं घं ङं आं हृदयाय नमः । इं चं छं जं झं ञं ईं शिरसे स्वाहा । उं टं ठं डं ढं णं ऊं शिखायै वषट् । एं तं थं दं धं नं ऐं कवचाय हुं । ओं पं फं बं भं मं औं नेत्रत्रयाय वौषट् । अ यं रं लं वं शं षं सं हं लं क्षं अः अस्त्राय फट् ॥ इति षडङ्गन्यासः इति विशुद्धमातृकान्यासः । अं नमः ललाटे आं नमः मुखवृत्ते इं नमः दक्षिणचक्षुषि ईं नमः वामचक्षुषि उं नमः दक्षकर्णे ऊं नमः वामकर्णे ऋं नमः दक्षनासायाम् ॠं नमः वामनासायां ऌं नमः दक्षगण्डे ॡं नमः बामगण्डे एं नमः ओष्ठे ऐं नमः अधरे ओं नमः ऊर्द्ध्वदन्तपङ्क्तौ औं नमः अधोदन्तपङ्क्तौ अं नमः ब्रह्मरन्ध्रे अः नमः मुखे कं खं गं घं ङं नमः दक्षबाहुमूलसन्ध्यग्रकेषु । चं छं जं झं ञं नमः वामबाहुमूलसन्ध्यग्रकेषु । टं ठं डं ढं णं नमः दक्षपादमूलसन्ध्यग्रकेषु । तं थं दं धं नं नमः वामपादमूलसन्ध्य-

ग्रकेषु। पं नमः दक्षपार्श्वे फं नमः वामपार्श्वे बं नमः पृष्ठे भं नमः नाभौ मं नमः उदरे यं नमः हृदि रं नमः दक्षस्कन्धे लं नमः ककुदि वं नमः वामस्कन्धे शं नमः हृदादिदक्षकरे षं नमः हृदादि वामकरे सं नमः हृदादिदक्षपादे हं नमः हृदादिवामपादे ळं नमः हृदादुदरे क्षं नमः हृदादिमुखे ओं नमः शिरसः पादपर्यन्तमिति बाह्यमातृकान्यासः। श्रीसावित्रीमातृमध्ये। मणिगेहाय नमः। मध्ये। चिन्तामणिमण्डपाय नमः तत्र श्मशानाय नमः। तत्र धर्माय नमः ज्ञानाय नमः वैराग्याय नमः। तद्वामे। अधर्माय नमः अज्ञानाय नमः अवैराग्याय नमः अनैश्वर्याय नमः। तदुपरि। मं वह्निमण्डलाय नमः अं अर्कमण्डलाय नमः सों सोममण्डलाय नमः सं सत्त्वाय नमः रं रजसे नमः तं तमसे नमः मूलं सहस्रदलकमलाय नमः मूलं संविन्नालाय नमः प्रकृतिमयपत्रेभ्यो नमः विकृतिमयकेसरेभ्यो नमः पञ्चाशद्बीजभूषितकर्णिकायै नमः इत्यक्षतपुष्पैरभ्यर्च्य श्रीयोगपीठोपरि श्रीचक्रं विभाव्य साधारं पात्रं स्वाग्रतः संस्थाप्य सामान्यार्घ्यं स्थापयेत् तत्र स्ववामे त्रिकोणवृत्तचतुरस्रं मण्डलं विधाय मूलमुच्चार्य श्रीसरस्वतीसामान्यार्घ्यमण्डलाय नमः ओं

नमः त्रिकोणे ह्री नमः दक्षे ऐं नमः वामे तत्र चतुरस्त्रे ओं नमः ईशाने ह्रीं नमः आग्नेये ऐं नमः नैर्ऋते ओं नमः वायव्ये ह्री नमः मध्ये ऐं नमः सर्वदिक्षु इति पुष्पाक्षतैः सम्पूज्य तत्र मण्डले अस्त्राय फडिति त्रिपादिकां प्रक्षाल्य संस्थाप्य अग्निमण्डलाय द्वादशकलात्मने नमः इति सम्पूज्य मूलं सप्ताभिमन्त्रितं कृत्वा गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ इति तीर्थमावाह्य शुद्धं भावयेदिति सामान्यार्घविधिः ॥ अथ कलशस्थापनम् ॥ सामान्यार्घस्य वामे त्रिकोणषट्कोणवृत्तचतुरस्त्रमण्डलं कृत्वा तन्मण्डलं मूलेनाभ्यर्च्य मूलमुच्चार्य श्रीसरस्वतीकलशमण्डलाय नमः ततः पूर्ववन्मूलेन मण्डलमभ्यर्च्य तत्र प्रक्षालितत्रिपादिकां संस्थाप्य दध्यक्षतपुष्पैः सम्पूज्य तत्रानामिकाङ्गुष्ठकरामृतधारापातेन कलशमापूर्य ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः अमृतेन अमृतेश्वरि अमृतोद्भवे अमृतं श्रावय श्रावय भृगुशापं मोचय मोचय ओं ह्रीं श्रीं सुरादेव्यै फडिति सप्तधाभिमन्त्र्य ओं ह्रीं श्रीं हसक्षमलवरयूं सहक्षमलवरयीं आनन्दभैरवाय नमः वौषट् ओं ह्रीं श्रीं आनन्दभैरवाय सुरादेवीपादुकाभ्यां नमः

इत्यभ्यर्च्य धेनुयोनिमुद्रे प्रदर्श्य मत्स्यमुद्रया च्छादयेत् इतिकलशस्थापनं कुर्यात् ओं ह्रीं सूर्यमण्डलसम्भूते वरुणालयसम्भवे। अमाबीजमये देवि शुक्रशापाद्विमुच्यताम्॥ ओं ह्रीं वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि। तेन सत्येन ते देवि ब्रह्महत्यां व्यपोहतु॥ ओं ह्रीं एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम्। कन्चोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम्॥ ओं ह्रीं पावमानः परानन्दः पावमानः परो रसः। पावमानं परं ब्रह्म तेन ते पावयाम्यहम्॥ ओं ह्रीं कृष्णशापविनिर्मुक्ता त्वं मुक्ता ब्रह्मशापतः। विमुक्ता रुद्रशापेन पवित्रा भव साम्प्रतम्॥ इति सम्पूज्य मूलं त्रिधा जपेत् तस्योपरि धेनुयोनिमत्स्यमुद्राः प्रदर्श्य कुम्भं पूर्णाभियुक्तं स्वधामयं ध्यात्वा तत्त्वमुद्रया च्छादयेदिति द्रव्यशुद्धिः। ओं ह्रीं कृतावतारो हरिणा कलिना पीडितं जगत्। बलिना निग्रहीतं तु कौलिकानां हिताय च। भक्तानोपरितोषार्थं स्वयं मीनो ऽभवद्धरिः॥ मीनोपरि मूलं त्रिधा जपन् मुद्रात्रयं प्रदर्श्य ओं ऐं छागलादिगवान्तादिकृतरूपाय वै नमः॥ पूजार्थं देवदेव्योश्च पवित्रा भव साम्प्रतमिति ओं सरस्वतीयच्चार्थमाकलितानि सिद्धये॥ वस्तूनि सुरभेयानि

पवित्रा भव साम्प्रतमिति ॥ मूलं त्रिधा जपन् मु-
द्रात्रयं प्रदर्श्य कलशादुत्तरतः पादार्घ्याचमनीयप-
वित्राणि संस्थाप्य गुरुशक्तिवटुकसाधकपात्राणि सं-
स्थाप्य सामान्यार्घ्यवत् सम्पूज्य श्रीचक्रं पूजयेदि-
ति पात्रस्थापनम् ॥ कामकलारूपमात्मानं ध्यात्वा
मूलेन देवीमावाह्य देवेशि भक्तिसुलभे परिवारसम-
न्विते। यावत्त्वां पूजयिष्यामि तावद्देवि त्विहावह ॥
इत्यावाहनमुद्रां प्रदर्श्य श्रीब्रह्मसहिते सरस्वति इ-
हागच्छ इहागच्छ इहावह इहावह इह सन्निधेहि इह
सन्निधा भव इह सन्निधा भव स्वाहेति सन्निध्य आं
ऐं ह्रीं सः सरस्वत्याः प्राणा इह प्राणाः। जीव इह
स्थितः। सर्वेन्द्रियाणि। वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्रा-
णप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहेति देव-
देव्योः जीवितं विन्यस्य चतुर्द्वारपूजां कुर्यात्। ओं
ह्रीं ऐं गं गणपतये नमः धं धर्मराजाय नमः वं वरु-
णाय नमः कुं कुबेराय नमः इति पुष्पैरभ्यर्च्य पूर्वद-
क्षिणपश्चिमोत्तरेषु प्रथमावरणम्। इं इन्द्राय नमः रं
अग्नये नमः धं धर्मराजाय नमः निं निर्ऋतये नमः
वं वरुणाय नमः वां वायवे नमः कुं कुबेराय नमः
ईं ईशानाय नमः गन्धाक्षतपुष्पैः लोकपालपूजा।
त्रिरेखासु द्वितीयावरणम्। स्वगुरुं पूजयामि तर्पया-

मि नमः। परमगुरुं पूजयामि तर्पयामि नमः। परा-
परगुरु पूजयामि तर्पयामि नमः। परमेष्ठिगुरुं पूज-
यामि तर्पयामि नमः। वामावर्तेन तृतीयावरणम् ॥
वाग्देवीअसिताङ्गभैरवयुतपादुकां पूजयामि तर्पयामि
नमः। सरस्वतीचण्डेश्वरभैरवयुतपादुकां पूजयामि
तर्पयामि नमः। वाणी उन्मत्तभैरवयुतपादुकां पूजया-
मि तर्पयामि नमः इतिनागपत्रेषु वामावर्तेन पूजये-
दिति चतुर्थावरणम् ॥ अम्बालिकाम्बायाः पादुकां
पूजयामि तर्पयामि नमः। विद्याधरासंहारभैरवयु-
तपादुकां पूजयामि तर्पयामि नमः। वीणामुखीकपा-
लभैरवयुतपादुकां पूजयामि तर्पयामि नमः। अम्बा-
याः पादुकां पूजयामि तर्पयामि नमः। बगलापादुकां-
पूजयामि तर्पयामि नमः। छिन्नशीर्षापादुकां पूजया-
मि तर्पयामि नमः। अम्बिकापादुकां पूजयामि तर्प-
यामि नमः। भगपादुकां पूजयामि तर्पयामि नमः ॥
षट्कोणेषु दक्षिणावर्तेन पञ्चमावरणम्। कालिकायाः
पादुकां पूजयामि तर्पयामि नमः। त्रिपुरापादुकां पू-
जयामि तर्पयामि नमः दुर्गापादुकां पूजयामि तर्प-
यामि नमः। ईशानाग्ने यक्रमेण षष्ठमावरणम् ॥ मू-
लविद्यां सप्तधा उच्चार्य श्रीसरस्वतीं देवीं ब्रह्मस-
हितां सपरिवारां सायुधां पूजयामि तर्पयामि नमः।

मूलं सप्तधा जप्त्वा पुस्तकं पूजयामि तर्पयामि नमः ।
मूलं सप्तधा जप्त्वा घटं पूजयामि तर्पयामि नमः ।
मूलं सप्तधा जप्त्वा विन्दौ सम्पूज्य मूलं त्रिधा जप्त्वा श्रीशिवसहितायै सरस्वत्यै गन्धाक्षतपुष्पधूपदीपनैवेद्यपञ्चामृतोपस्तरणमसि स्वाहेति वलिमुत्सृज्य ओं ह्रीं देवीपुत्र वटुकनाथ कपिलजटाभारभासुर भास्करत्रिनेत्र ज्वालामुख इमां वलिपूजां गह्ण गृह्ण मम वाञ्छितसिद्धिं देहि देहि इति दक्षे ॥ ओं यां यीं योगिनीभ्यः स्वाहा इत्युत्तरे ॥ ओं ह्रीं क्षां क्षेत्रपालाय वौषडिति पश्चिमे ॥ ओं गां ग्लौं गणपतये नमः इतिपूर्वे ॥ ओं सौं सर्वविघ्नकृद्भ्यो भूतेभ्यः स्वाहेति वलिमुत्सृज्य नैरृतीं दिशं संस्थाप्य पूर्ववत् मन्त्रसङ्कल्पं विधाय मूलेन षडङ्गं कृत्वा देवीं ध्यात्वा मालामभ्यर्च्य दक्षहस्ते धृत्वा यथाशक्ति मूलविद्यां जपेत् । ततो गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ॥ सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥ जपं देव्या हस्ते समर्प्य तेजोरूपं जपफलं गृहीत्वा देवदेव्योरग्रतः कवचसहस्रनामस्तवपाठं विधाय प्रातःप्रभृतिसायान्तं सायादिप्रातरन्ततः । यत्करोमि जगन्मातस्तदस्तु तव पूजनम् ॥ इतिपुष्पाञ्जलिं दत्त्वा योनिमुद्रया प्रणम्य

वादिनी ॥ १५ ॥ शं षं सं हं कटिं पातु देवी श्रीव-
गलामुखी । ऊरू लं क्षं सदा पातु सर्वविद्याप्रदा
शिवा ॥ १६ ॥ सरस्वती पातु जङ्घे रमेश्वरप्रपूजि-
ता । ओं ह्रीं ऐं ह्रीं पातु पादौ पादपीठनिवासिनी
॥१७॥ विस्मारितं च यत्स्थानं यद्देशो नामवर्जितः ।
तत्सर्वं पातु वागेशी मूलविद्यामयी परा ॥ १८ ॥
पूर्वे मां पातु वाग्देवी वागेशी वह्निके च माम् । स
रस्वती दक्षिणे च नैर्ऋत्ये चानलप्रिया ॥ १९ ॥ प-
श्चिमे पातु वागीशा वायौ वेणामुखी तथा । उत्तरे
पातु विद्या नैशान्यां विद्याधरी तथा ॥ २० ॥ अ-
सिताङ्गो जलात् पातु पयसो रुरुभैरवः । चण्डश्च पा-
तु वातान्मे क्रोधेशः पातु धावतः ॥ २१ ॥ उन्मत्त-
स्तिष्ठतः पातु भीषणश्चाग्रतोऽवतु । कपाली मार्ग-
मध्ये च संहारश्च प्रवेशतः ॥ २२ ॥ पादादिमूर्धप-
र्यन्तं वपुः सर्वत्र मेऽवतु । शिरसः पादपर्यन्तं देवी
सरस्वती मम ॥२३॥ इतीदं कवचं वाणीमन्त्रगर्भं ज-
यावहम् । त्रैलोक्यमोहनं नाम दारिद्र्यभयनाशनम्
॥ २४ ॥ सर्वरोगहरं साक्षात् सिद्धिदं पापनाशनम् ।
विद्याप्रदं साधकानां मूलविद्यामयं परम् ॥ २५ ॥
परमार्थप्रदं नित्यं भोगमोक्षैककारणम् । यः पठेत्
कवचं देवि विवादे शत्रुसङ्कटे ॥ २६ ॥ वादिमुखं

स्तम्भयित्वा विजयी गृहमेष्यति । पठनात् कवच-
स्यास्य राज्यकोपः प्रशाम्यति ॥२७॥ त्रिवारं यः पठे-
द्रात्रौ श्मशाने सिद्धिमाप्नुयात् । रसैर्भूर्जे लिखेद्धर्मं
रविवारे महेश्वरि ॥ २८ ॥ अष्टगन्धैर्लाक्षया च
धूपदीपादितर्पणैः । सुवर्णगुटिकां तत्स्थां पूजयेत्
यन्त्रराजवत् ॥ २९ ॥ गुटिकैषा महारूपा शुभा सर-
स्वतीप्रदा । सर्वार्थसाधनी लोके यथाभीष्टफलप्रदा ॥
३० ॥ गुटिकेयं शुभा देव्या न देया यस्य कस्यचि-
त् । इदं कवचमीशानि मूलविद्यामयं ध्रुवम् ॥
३१॥ विद्याप्रदं श्रीप्रदं च पुत्रपौत्रविवर्द्धनम् । आयु-
ष्करं पुष्टिकरं श्रीकरं च यशःप्रदम् ॥ ३२ ॥ इतीदं
कवचं देवि त्रैलोक्यमोहनाभिधम् । कवचं मन्त्रगर्भं
तु गोपनीयं स्वयोनिवत् ॥ ३३ ॥

इतिश्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये सरस्वतीकवचं
सम्पूर्णम् ॥

## सरस्वतीकवचान्तरम् ।

नारायण उवाच । कवचं शृणु विप्रेन्द्र यद्दत्तं
विधिना पुरा । विश्वस्रष्टं विश्वजयं भृगवे गन्धमा-
दने ॥१॥ भृगुरुवाच । ब्रह्मन् वेदविदां श्रेष्ठ ब्रह्मज्ञान
विशारद । सर्वज्ञ सर्वजनक सर्वेश सर्वपूजित ॥ २ ॥

सरस्वत्याश्च कवचं ब्रूहि मे त्वं कृपानिधे। अयात-
याममन्त्राणां समूहसंयुतं परम् ॥३॥ ब्रह्मोवाच। शृणु
वत्स प्रवक्ष्यामि कवचं सर्वकामदम्। श्रुतिसारं च
श्रुत्युक्तं तथा च श्रुतिपूजितम् ॥ ४ ॥ उक्तं कृष्णेन
गोलोके मह्यं वृन्दावने वने। रासेश्वरेण रासेन स्थि-
तेन रासमण्डले ॥५॥ अतीवगोपनीयं च कल्पवृक्षसमं
परम्। अश्रुताज्ञातमन्त्राणां समूहैश्च समन्वितम् ॥
६ ॥ यद्धृत्वा पठनाद्ब्रह्मन् बुद्धिमांश्च बृहस्पतिः।
यद्धृत्वा भगवान् शुक्रः सर्वदैत्येषु पूजितः ॥ ७ ॥
पठनाद्धारणाद्वाग्मी कवीन्द्रो वाल्मीको मुनिः।
स्वायम्भुवो मुनिश्चैव यद्धृत्वा सर्वपूजितः ॥ ८ ॥
कपिलो गोतमः कण्वः पाणिनिः शाकटायनः। ग्र-
न्थकारश्च यद्धृत्वा दक्षः कात्यायनः स्वयम् ॥ ९ ॥
धृत्वा वेदविभागं च पुराणान्यखिलानि च। चकार
लीलामात्रेण कृष्णद्वैपायनः स्वयम् ॥ १० ॥ शाता-
तपश्च संवर्त्तो वशिष्ठश्च पराशरः। यद्धृत्वा पठनाद्
ग्रन्थं याज्ञवल्क्यश्चकार सः ॥ ११ ॥ ऋष्यशृङ्गो भर-
द्वाजश्चास्तीको देवलस्तथा। जैगीषव्यो ऽथ जावा-
लिर्यद्धृत्वा सर्वपूजितः ॥ १२ ॥ कवचस्यास्य विप्रेन्द्र
ऋषिरेष प्रजापतिः। स्वयं हि बृहतीछन्दो देवो रा-
सेश्वरः प्रभुः ॥ १३ ॥ सर्वतत्त्वपरिज्ञानसर्वार्थसाध-

नेषु च। कवितासु च सर्वासु विनियोगः प्रकीर्त्तितः ॥ १४ ॥ ओं ह्रीं सरस्वत्यै स्वाहा शिरो मे पातु सर्वतः। ह्रीं वाग्देवतायै स्वाहा भालं मे सर्वदावतु ॥ १५ ॥ ओं श्रीं ह्रीं ब्राह्म्यै स्वाहा भालं मे सर्वदावतु। ओं श्रीं ह्रीं ब्राह्म्यै स्वाहा दन्तपङ्क्तिं सदावतु ॥ १६ ॥ ओं श्रीं ह्रीं ग्रीवां कण्ठं मे श्रीं सदावतु। ह्रीं विद्याधिष्ठातृदेव्यै स्वाहा वक्षः सदावतु ॥ १७ ॥ ओं ह्रीं विद्यास्वरूपायै स्वाहा मे पातु नाडिकाम्। ओं ह्रीं क्लीं च वाण्यै स्वाहा मम पृष्ठं सदावतु ॥१८॥ ओं सर्ववर्णात्मिकायै पादयुग्मं सदावतु। ओं सर्वकण्ठवासिन्यै स्वाहा मम प्राच्यां सदावतु ॥ १९ ॥ ओं सर्वजिह्वाग्रवासिन्यै स्वाहाग्निदिशि रक्षतु। ओं ऐं श्रीं क्लीं सरस्वत्यै बुधजनन्यै स्वाहा ॥ २० ॥ सततं मन्त्रराजोऽयं दक्षिणे मां सदावतु। ओं ऐं ह्रीं पुष्करवासिन्यै स्वाहाधो मां सदावतु ॥ २१ ॥ ओं ग्रन्थबीजस्वरूपायै स्वाहा मां सर्वतोऽवतु। इति ते कथितं विप्र सर्वमन्त्रौघविग्रहम् ॥ २२ ॥ इति विश्वजयं नाम कवचं ब्रह्मरूपकम्। पुरा श्रुतं धर्म्मवक्त्रात् पर्वते गन्धमादने ॥ २३ ॥ तव स्नेहान्मयाख्यातं प्रवक्तव्यं न कस्यचित्। गुरुमभ्यर्च्य विधिवत् वस्त्रालङ्कारचन्दनैः ॥ २४ ॥ प्रणम्य दण्डवद्भूमौ धारयेत् कवचं

सुधीः । पञ्चलक्षजपेनैव सिद्धं तु कवचं भवेत् ॥ २५ ॥ यदि स्यात् सिद्धकवचो बृहस्पतिसमो भवेत् । महावाग्मी कवीन्द्रश्च त्रैलोक्यविजयी भवेत् ॥ २६ ॥ शक्नोति सर्वं छेत्तुं स कवचस्य प्रसादतः । इदं ते काण्वशाखोक्तं कथितं कवचं मुने ॥ २७ ॥ स्तोत्रं पूजाविधानं च ध्यानं च वन्दनं तथा ॥

इति ब्रह्मवैवर्ते प्रकृतिखण्डे सरस्वतीकवचं समाप्तम् ॥

—···—

## अथ सरस्वतीसहस्रनामस्तोत्रम् ।

देव्युवाच । भगवन् देवदेवेश शरणागतवत्सल । वागीश्वर्या नामसाहस्रं कथयस्वानुकम्पया ॥ १ ॥ भैरव उवाच । शृणु देवि प्रवक्ष्यामि नामसाहस्रमुत्तमम् । प्रकाश्यं दुर्लभं लोके दुःखदारिद्र्यनाशनम् ॥ २ ॥ महापातककोटीनां परमैश्वर्यदायकम् । सर्वागमरहस्याढ्यं देवानामपि दुर्लभम् ॥ ३ ॥ समस्तशोकशमनं मूलविद्यामयं परम् । सर्वमन्त्रमयं दिव्यं भोगमोक्षफलप्रदम् ॥ ४ ॥ देवीसरस्वतीनामसहस्रं पापनाशनम् । अस्य श्रीसरस्वतीसहस्रनामस्तोत्रस्य श्रीकण्व ऋषिः विराट् छन्दः श्रीसरस्वती देवता ओं बीजं ह्रीं शक्तिः ऐं कीलकं श्रीभोगापवर्गसिद्ध्यर्थे जपे पाठे विनियोगः । ओं ह्रीं

ऐं ह्रीं महावाणी विद्या विद्येश्वरी तथा ॥ ५ ॥ सरस्वती च वागेशी देवी श्रीभगमालिनी। महाविद्या महामाता महादेवी महेश्वरी ॥ ६ ॥ वेणा वेणमुखी भव्या कुलाकुलविचारिणी । अमूर्तामूर्तरूपा च विद्या चैकादशाक्षरी ॥ ७ ॥ स्वरूपा निर्गुणा सत्त्वा मदिरारुणलोचना । साध्वी शूलवती शाला सुधा-कलसधारिणी ॥ ८ ॥ खड्गिनी पद्मिनी पद्मा पद्म-किञ्जल्करञ्जिता। धराधरेन्द्रजनिता दक्षिणा दक्षजा दया ॥ ९ ॥ दयावती महामेधा मोदिनी बोधिनी गदा। गदाधरार्चिता गोत्रा गङ्गा गोदावरी गया ॥ १० ॥ महाप्रभावसहिता महामेधा महाधृतिः । महामोहा महातुष्टिः महापुष्टिर्महायशाः ॥ ११ ॥ वरप्रदा वीरगम्या वीरमाता वसुन्धरा । वयो-दाना वयस्या च वीरभूर्वीरनन्दिनी ॥ १२ ॥ बाला सरस्वती लक्ष्मीः दुर्गा दुर्गतिहारिणी । खेटका-युधहस्ता च खरेशी खरसन्निधा ॥ १३ ॥ शरीरशीर्ष-मध्यस्था वैखरी च खरेश्वरी। वेद्या वेदप्रिया वैद्या चामुण्डा मुण्डधारिणी ॥ १४ ॥ मुण्डमालार्चिता मुद्रा क्षोभनाकर्षणक्षमा। ब्राह्मी नारायणी देवी कौमारी चापराजिता ॥ १५ ॥ रुद्राणी च शचीन्द्रा-णी वाराही वीरसुन्दरी। नारसिंही भैरवेशी भैरवा-

कारभीषणा ॥ १६ ॥ नानालङ्कारशोभाढ्या नाग-
यज्ञोपवीतिनी । वाणी वेणामुखी वीरा वीरेशी वीर-
मर्दिनी ॥१७॥ वीरारण्यकभाव्या च वैरहा शत्रुघा-
तिनी । वेदा वेदमयी विद्या विधातृवरदा विभा ॥
१८ ॥ बटुकी बटुकेशी च वसुहा वसुहारिणी ।
चटुप्रिया वामनेत्रा लास्यहास्यैकवल्लभा ॥ १९ ॥
अरूपा निर्गुणा सत्या भवानी भवमोचिनी। संसार-
तारिणी तारा त्रिपुरा त्रिपुरेश्वरी ॥ २० ॥ त्रिकूटा
त्रिपुरेशानी त्र्यम्बकेशी त्रिलोकधृक् । त्रिवर्गेशी
त्रयी त्र्यक्षी त्रिवर्गफलदायिनी ॥ २१ ॥ अतीव-
सुन्दरी रम्या रेवा रावप्रिया रवा । देवेशी देवमाता
च देवी देववरप्रदा ॥ २२ ॥ धवप्रिया धवहरा दु-
ष्पूरा दुःखहा धवा । धर्मा धर्मप्रिया धीरा धनदा
धनहारिणी ॥ २३ ॥ श्रीः कान्तिः कमला लक्ष्मीः
पद्मा पद्मप्रिया हरा । कमला कमलेशानी कामदा
कामपालिनी ॥ २४ ॥ कुलका कालकूटा च काली
कपालिनी शिवा । खड्गा खड्गधरा खेटा खेटेशी
खलनाशिनी ॥ २५ ॥ खट्वाङ्गधारिणी ख्याता खेला
खेलप्रिया सदा । शाम्भवी शाङ्करी शाम्बी शिवा
शुभप्रियङ्करी ॥ २६ ॥ शिवरूपा शिवा भूताशि-
वहा शिवभूषणा । शिवदाशिवहर्त्री च शान्ता

श्रद्धा प्रबोधिनी ॥ २७ ॥ शुभदा शुद्धरूपा च सा-
धकानां वरप्रदा । जीवरूपा जीवनादा जैनमार्गप्र-
बोधिनी ॥ २८ ॥ जेता जयश्री जयदा जगदभय-
कारिणी । साङ्ख्यरूपा साङ्ख्यमुखा साङ्ख्येशी साङ्ख्य-
नाशिनी ॥ २९ ॥ साङ्ख्यदा बुद्धिदा नित्या योगमा-
र्गप्रदर्शिनी । योगप्रिया योगगम्या योगेशी योगधा-
रिणी ॥ ३० ॥ योगयुजा योगयज्ञा योगज्ञा रोगना-
शिनी । रोगप्रिया रोगहर्त्री रोगघ्नी रोगहा शिवा ॥
३१ ॥ रोगराज्ञी रोगकरा रोग्यारोगप्रदा सदा ।
गङ्गा गोदावरी तापी तपसा वज्रदायिनी ॥ ३२ ॥
गया सरस्वती देवी गयारूपा गयाश्रया । गोदा
गोवर्द्धनेशानी गरलाशनवल्लभा ॥ ३३ ॥ गां ज्ञा-
तबीजनिलया गारुडी गरुडात्मिका । गतिरूपा
गतिशिवा गतिका राजभासिनी ॥ ३४ ॥ गमनी
गमकारी च गमकाभागमप्रदा । यमुना यामिनी
यामी यमरूपा यमप्रदा ॥ ३५ ॥ यमेश्वरी यमी
धात्री यमा यमविधारिणी । यमका यागविदा च
यशःपापयशःप्रदा ॥ ३६ ॥ यशोदा पतिसेव्या च
यशा यशःप्रदा शिवा । वितस्ता वैतिशीरूपा विद्या
विद्यावरप्रदा ॥ ३७ ॥ वैद्या विस्ताररूपा च वित्त-
रूपा वित्तेश्वरी । सरी सरस्वतीरूपा सारसी च श-

शिप्रभा ॥ ३८ ॥ शारदा शारहर्त्री च चारुचरणभू-
षणा। गोदावरी गदाहस्ता गोपाला गोपवर्द्धिनी ॥
३९ ॥ गोशृङ्गा गारुडरूपा प्रियाप्रियकरा सदा।
प्रीतिदा प्रीतिहर्त्री च प्रेतस्था प्रेतनाशिनी ॥ ४० ॥
प्रीतिभुक्ता स्पृहा चैव प्रीतानां क्षयकारिणी। प्रीते-
शी प्रमदा सिद्धा प्रकृष्टा प्रकृतोत्तमा ॥ ४१ ॥ प्रवृ-
त्तिर्वृत्तरूपा च वृत्तदा वृत्तिनाशिनी। वर्त्तुला वर्त्तु-
लेशानी वृत्तता वर्तुलप्रदा ॥ ४२ ॥ अकाररूपा अ-
मला निर्मला निर्मलेश्वरी। अःस्वरूपा अकारेशी
पापहा पाशहारिणी ॥ ४३ ॥ परेशी परहारीच परा-
परविहारिणी। परदा परमेशानी परमा परमेश्वरी
॥४४॥ चित्तदा चित्तहारी च चित्ता चित्तप्रदा परा।
फलदा स्फीतवस्त्रा च फकारा भीमनादिनी ॥ ४५ ॥
फवर्णरूपा विमला फाल्गुणी विजयप्रदा। फेसख-
स्तुरता पात्री पुत्रदा पुत्रिका प्रभा ॥ ४६ ॥ पूभा-
करी पूभेशानी पूभुरूपा पूभुः शिवा। चान्द्री चन्द्र-
करा चिन्ता ज्योत्स्नाजालविनाशिनी ॥ ४७ ॥
तोरीचरण्यकवर्णा च कृशाङ्गी कुलकूजिता। सर्वान-
न्दस्वरूपा च सर्वसङ्कष्टतारिणी ॥ ४८ ॥ नित्या नि-
त्यमया नन्दा भद्रा नीलसरस्वती। गायत्री सुचरि-
त्रा च कौलव्रतपरायणा ॥ ४९ ॥ हिरण्यगर्भा भू-

गर्भा विश्वगर्भा यशस्विनी । हेमचन्दनरम्याङ्गी दिव्यैश्वर्य्यविभूषिता ॥५०॥ जगन्माता जगद्धात्री जगतामुपकारिणी । ऐन्द्री सौम्या तथापाप्मा ब्रह्माणी वायवी तथा ॥ ५१ ॥ आग्नेयी नैर्ऋती चैव ईशानी चन्द्रिकाधिका । सुमेरुतनया वन्द्या सर्वेषा-मुपकारिणी ॥ ५२ ॥ लक्षजिह्वा सरोजाक्षी मुण्ड-स्त्रजविभूषणा । सर्वानन्दमयी सर्वा सर्वानन्दस्वरू-पिणी ॥ ५३ ॥ धृतिर्मेधा तथा लक्ष्मीः श्रद्धा पन्नग-शायिनी । रुक्मिणी जानकी दुर्गा शून्या शून्यवती रतिः ॥ ५४ ॥ कामाख्या मोक्षदानन्दा नारसिंही जयप्रदा । महादेवरता चण्डी चण्डमुण्डविनाशिनी ॥ ५५ ॥ दीर्घकेशी सुकेशी च पिङ्गकेशा महाकचा । भवानी भवपत्नी च भवभीतिहरा शची ॥ ५६ ॥ पौरन्दरी तथा विष्णुमाया माहेश्वरी तथा । सर्वेषां जननी नित्या सर्वाङ्गी वैरिमर्दिनी ॥ ५७ ॥ काष्ठा निष्ठा प्रतिष्ठा च ज्येष्ठा श्रेष्ठा जयावहा । सर्वसिद्धि-प्रदा देवी सर्वाणी सिद्धसेविता ॥ ५८ ॥ योगेश्वरी योगगम्या योगा योगेश्वरप्रिया । ब्रह्मेशरुद्रनमिता सुरेश्वरी वरप्रदा ॥ ५९ ॥ त्रिवृतस्था त्रिलोकस्था त्रिविक्रमपदोद्भवा । खतारा तारिणी तारा दुर्गा सन्तारिणी परा ॥ ६० ॥ सुतारिणी तारगतिर्भूति-

स्तारेश्वरप्रभा । गुह्यविद्या महाविद्या यज्ञविद्या सुशोभना ॥ ६१ ॥ अध्यात्मविद्या वै पूज्या वपुस्था परमेश्वरी । आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च यामिनी ॥६२॥ गौरी वागीश्वरी गोश्रीर्गायत्री कमलोद्भवा। विश्वम्भरा विश्वरूपा विश्वमाता वसुन्धरा ॥ ६३ ॥ सिद्धिः स्वाहा स्वधा स्वस्ति सुधा सर्वार्थसाधिनी । इच्छा सृष्टिः धृतिर्भूतिः कीर्तिः श्रद्धा दया मतिः ॥६४॥ श्रुतिर्मेधा धृतिश्चैव विश्वा विबुधवन्दिता । अनसूया गतिर्धात्री काशश्वासहरा तथा ॥६५॥ प्रतिज्ञा सत्कविर्भूतिर्द्यौः प्रभा विश्वभाविनी। स्मृतिर्वाग्विश्वजननी पश्यती मध्यमा समा ॥ ६६ ॥ सन्ध्या मेधा प्रभा भीमा सर्वाकाराभयप्रदा । काञ्ची काया महामाया मोहिनी माधवप्रिया ॥ ६७ ॥ सौम्या भोगा महाभोगा भोगिनी भोगदायिका । प्रतीची कनकप्रख्या सुवर्णकमलासना ॥ ६८ ॥ हिरण्यवर्णा सुश्रोणिर्हरिणी रमणी रमा । चन्द्रा हिरण्मयी ज्योत्स्ना रमा शोभा शुभावहा ॥ ६९ ॥ त्रैलोक्यसुन्दरी रामा रमा विभववाहिनी । पद्मस्था पद्मनिलया पद्ममालाविभूषिता ॥७०॥ पद्मयुग्मधरा कान्ता दिव्याभरणभूषिता । महानारायणी देवी वैष्णवी वीरवन्दिता ॥ ७१ ॥ कालसङ्कर्षिणी घोरा

तत्त्वसङ्कर्षणी हरा। जगत्सम्पूरणी विश्वा महा-भैरवभूषणा ॥ ७२ ॥ वारुणी वरदा वाच्या घण्टा-कर्णप्रपूजिता। नृसिंही भैरवी ब्राह्मी भास्करी व्योम-चारिणी ॥ ७३ ॥ ऐन्द्री कामधनुःसृष्टिः कामयोनि-र्महाप्रभा। वृक्षवेशा महाशक्तिः बीजशक्त्यात्मदर्शना ॥ ७४ ॥ गरुडारूढहृदया चान्द्री च मधुरानना। महोग्ररूपा वाराही नारसिंही हतापरा ॥ ७५ ॥ युगान्तहुतभुग्ज्वाला कराला पिङ्गला करा। त्रैलोक्यभूषणा भीमा श्यामा त्रैलोक्यमोहिनी ॥ ७६ ॥ महोत्कटा महारामा महाचण्डा महाशना। शङ्खिनी लेखिनी स्वस्था खड्गिनी खेचरीश्वरी ॥ ७७ ॥ भद्रकाली चित्ररूपा कौमारी भगमालिनी। कल्याणी कामधुक् ज्वालामुखी चोत्पलमालिका ॥ ७८ ॥ बन्धुका धनदा सूर्यहृदया नागहस्तिका। अजिता कर्षिणी रीतिर्भुशुण्डी गरुडासना ॥ ७९ ॥ वैश्वानरी महामारी महाकालविभूषिता। महाम-यूरी विभवा सर्वानन्दा रतिप्रदा ॥ ८० ॥ तद्गतिः पद्ममाला च वधूर्वेगविभाविनी। भाविनी सत्क्रिया देवसेना हिरण्यरञ्जिनी ॥ ८१ ॥ सहस्रदा यज्ञमाता हस्तिनादप्रबोधिनी। विरूपाक्षी विशालाक्षी भक्तानां जयरक्षिणी ॥८२॥ बहुरूपा सुरूपा च विरूपा रूप-

वर्जिता। घण्टानिनादबहुला जीमूतघननिःस्वना ॥ ८३॥ आर्या सौर्या सुमध्या च धर्मकामार्थमोक्षदा। भक्तार्तिशमनो भव्या भवबन्धविमोचिनी ॥ ८४ ॥ दीक्षा वीक्षा परोक्षा च समीक्षा वीरवत्सला। अतिसिद्धा सुसिद्धा च बेदविद्या धनार्चिता ॥ ८५ ॥ स्वदीप्तलिलिहाना च कराली विश्वपूरकी। चिदाकाशरुचा राज्ञी तोषिनी विन्दुमालिनी ॥ ८६ ॥ क्षीरधारा सजलदा स्वप्रभा च स्वरार्च्चिता। हव्यगर्भा चाज्यगर्भा जुह्वती यज्ञसम्भवा ॥ ८७ ॥ सर्वकामप्रभा भद्रा सुभद्रा सर्वमङ्गला। श्वेता सशुक्लवसना शुक्लमाल्यानुलेपना ॥ ८८ ॥ हंसाहितकरी हंसी हज्जा हृत्कमलालया। सितातपत्रा सुश्रोणिः पद्मपत्रायतेक्षणा॥८९॥ सावित्री सत्यसङ्कल्पा कामदा कामदायिनी। दर्शनीया दशा दक्षा स्पृश्या सेवा वराङ्गना ॥९०॥ भोगप्रिया भोगवती भोगीन्द्रशयनासना। अद्रिपुष्करिणी पुण्या पोषिणी पापसूदिनी ॥ ९१ ॥ श्रीमती च शुभाकारा परमैश्वर्यभूतिदा। अचिन्त्यानन्तविभवा भावाभावविभाविनी ॥ ९२ ॥ सुश्रोणिः सर्वदेहस्था सर्वभूजनसंस्कृता। वाला वलाहका देवी गौतमी गोकुलालया ॥ ९३ ॥ तोषणी पूर्णचन्द्राभा एकानना शतानना। शतक्रतु-

प्रिया शर्मदायिनी शर्मसुन्दरी ॥ ९४ ॥ शिवप्रिया श्येनहस्ता सुकेशी शुक्रसुन्दरी । शुक्रप्रिया शुक्ररतिः शुक्रेष्टा शुक्रसुन्दरी ॥ ९५ ॥ शुक्रानन्दा शुक्ररसा शुक्रिणी शुक्रसूदनी । शोकहा शोकमालाढ्या शुक्ला शोकैकसुन्दरी ॥ ९६ ॥ शुक्लावासा शुक्लमुखी शोभनाश्वशुभा स्मृता । भगेश्वरी भगावासा भोगिनी भोगवल्लभा ॥९७॥ नवपीठनिवासस्था शिवदा शिवसुन्दरी । नवेन्द्रियैकनिलया गौरी गीर्वाणसुन्दरी ॥ ९८ ॥ नवगाथा रमाकाशा गाथा गुगणसुन्दरी । नवरत्नविभूषाढ्या ब्राह्मी ब्रह्माण्डसुन्दरी ॥ ९९ ॥ नवदीपैकवसना पीता पावनसुन्दरी । नवपन्नगहाराढ्यप्रान्ता पन्नगसुन्दरी ॥ १०० ॥ नवमातृक्रमोल्लासा नव्या नक्षत्रसुन्दरी । कलापिनी कालगम्या भयदा भयनाशिनी ॥ १ ॥ सौदामनी मेघरवा दैत्यदानवमर्दिनी । जगन्माता भवकरी भूतधात्री सुदुर्लभा ॥ २ ॥ धन्या धन्येश्वरी भव्या रत्नधामाशुवर्द्धिनी । गान्धर्वी रेवती गङ्गा शकुनी विमलानना ॥ ३ ॥ दुर्गशान्तिकरी चैव तापसी मलयालया । आज्या च वज्रकौमारी खेशया कुशुमाश्रया ॥ ४ ॥ जगत्श्रीपा सिंहरथा दुर्जया खगवाहना । मनोभवा कामचरी सिद्धिदा सिद्धसेविता ॥५॥ व्योमलक्ष्मी-

महालक्ष्मीस्तेजोलक्ष्मीः स्वतेजसा। रसलक्ष्मीर्जगद्योनिर्गन्धलक्ष्मीर्वनाश्रया ॥ ६ ॥ श्रावणे श्रुतिदा नेत्रा रसनाप्रान्तचारिणी। विरिञ्चिमाता विभवा वरदा ऋजुवाहना ॥ ७ ॥ वीरा वीरेश्वरी वन्द्या विशोका वसुवर्धिनी। अनाहता कुण्डलिनी नलिनी वनवासिनी ॥ ८ ॥ राजगन्धर्ववनिता सुरेन्द्रनमिता सती। सिनीवाली कुहू राका महोत्पलनिवासिनी ॥ ९॥ अरुन्धती वसुमती भार्गवी विष्णुदेवता। मायूरी वज्रवेताली वज्रहस्ता वरानना ॥१०॥ अनघा धारिणी धीरा धमनी मणिभूषणा। राजश्रीरूपसहिता ब्रह्मश्रीर्ब्रह्मवन्दिता ॥ ११ ॥ जयश्री जयदा जेया स्वर्गश्रीः स्वर्गतिः सदा। वलाका त्वङ्करहिता विशाला दीपनो रतिः ॥ १२ ॥ संबोधिनी हारिणी च प्रभावा भवभूतिदा। अमृतस्यन्दिनी जीवजननी घटिकाश्रिता ॥ १३ ॥ धूम्रा कलावती प्राणा भास्वरांशुमती शुभा। शुण्डाध्वनिः सती सृष्टिर्विकृष्टोरेवतीति च ॥ १४॥ प्रायणी प्रायदा प्रख्या विश्वा पाण्डववासिनी। ओं ऐं ह्रीं श्रीं सरस्वती देवी चैकादशाक्षरी ॥ १५ ॥ इति वाण्याः परं नाम्नां सहस्रं शिवभाषितम्। सर्वमन्त्रैकनिलयं सुन्दरीमानसप्रियम् ॥ १६ ॥ नवतत्त्वमयं दिव्यं ब्रह्माण्डान्तसुधामयम्। भोगापवर्गदं

पुण्यं सर्वतीर्थैकसाधकम् ॥१७॥ वरदं सर्वदा शान्तं ग्रहाणां शान्तिकृत् परम् । भूतप्रेतपिशाचानां यक्ष-राक्षसभीतिषु ॥ १८ ॥ पठेद्वा पाठयेन्नाम्नां सहस्रं मन्त्रगर्भकम् । दूरादेव पलायन्ते खगेशादिव पन्नगाः ॥१९॥ कुष्ठादयो महारोगाः शममेष्यन्ति पाठनात्। साधकस्य सदा पुण्यवर्द्धनं धनवर्द्धनम् ॥ २० ॥ सर्वयज्ञैकफलदं सर्वमन्त्रैकसाधनम् । भूर्जत्वचि लिखेन्मन्त्री रविवारे च साधकः ॥ २१ ॥ मारयेद्रिपु-सङ्घातान् साधयेन्मन्त्रसञ्चयम् । आकर्षयेदप्सरसः उच्चाटयति वैरिणः ॥ २२ ॥ पठनाच्छ्रवणात् सत्यं धारणात्साधकोत्तमः । इह लोके सुखी भूत्वा परत्र त्रिदिवं व्रजेत् ॥ २३ ॥ पठेन्नाम्नां सहस्रं तु साधको मुच्यते भयात् । कल्पकोटिशतैरम्यैः कल्पकोटिशतै-रपि ॥२४॥ प्रभावमेषां नाम्नां वै सहस्रस्य च वर्णि-तुम् । न शक्तो ऽस्मि न शक्तो ऽस्मि पञ्चास्येन युतः शिवे ॥ २५ ॥ अलं विस्तारमात्रेण यः पठेत् साधकोत्तमः । विचरेद्भुवने ऽप्येको यथाहं भैरवो-त्तमः ॥ २६ ॥ इति नाम्नां सहस्रं तु सर्वमन्त्रैक-रूपकम् । वागीश्याः सर्वसर्वस्वं रहस्यं स्वर्गवासि-नाम् ॥ २७ ॥ गुह्यं गुप्तं सदा गोप्यं गोप्तव्यं पशु-सङ्कटे । अदीक्षिते शठे क्रूरे निःसत्त्वे शुचिवर्ज्जिते

॥ २८ ॥ दाम्भिके च खले मूर्खे प्रमत्ते विस्मृते ऽलसे । गुरुशास्त्रसदाचारदूषके कलहप्रिये ॥ २९ ॥ अदीक्षिताय यो दद्यात् कुशीलाय दुरात्मने । निन्दकायान्यशिष्याय स मन्त्री निरयीभवेत् ॥ ३० ॥ देयं शिष्याय शान्ताय कुलीनाय कृतार्थिने । साधकाय समर्थाय गोपनीयं मुमुक्षुभिः ॥ ३१ ॥

इति श्रीरुद्रयामले तन्त्रे उमाहरसंवादे दशविद्यारहस्ये सरस्वती-सहस्रनामस्तोत्रं समाप्तम् ।

---

## अथ सरस्वतीस्तोत्रम् ।

श्रीभैरव उवाच । शृणु देवि प्रवक्ष्यामि स्तोत्रं परमदुर्लभम् । वागीश्या मन्त्रगर्भं तु भुक्तिमुक्तिफलप्रदम् ॥ ओं अस्य श्रीसरस्वतीस्तोत्रमन्त्रस्य श्रीकण्व ऋषिः विराट् छन्दः श्रीसरस्वती देवता ह्रीं बीजं ओं शक्तिः ऐं कीलकं त्रिवर्गफलसाधने पाठे विनियोगः । ओं ह्रीं ह्रीं हृद्यैकबीजे(१)शशिरुचिकमला कल्पवृक्षस्य शोभे(२) भव्ये भव्यानुकूले कुमतिवनदवे विश्ववन्द्याङ्घ्रिपद्मे । पद्मे पद्मोपविष्टे प्रणतजनमनोमोदसम्पादयित्रि प्रोत्प्लुष्टाज्ञानकूटे हरिनिजदयिते देवि संसारसारे ॥ १ ॥ ऐं ऐं ऐं इष्ट-

---

(१) ह्रौं ह्रौं कृत्यैकबीजे—पा० २ पु० ।

(२) विस्पष्टशोभे—पा० २ पु० ।

रे कमलभवमुखाम्भोजभूतिस्वरूपे रूपारूपप्र-
रा सकलगुणमये निर्गुणे निर्विकारे। न स्थूले नातिसूक्ष्मे ऽप्यविदितविषये नापि विज्ञाततत्त्वे विश्वे विश्वान्तराले सुरवरनमिते निष्कले नित्य-शुद्धे ॥ २ ॥ ह्रीं ह्रीं ह्रीं जापतुष्टे हिमरुचिमुकुटे वल्लकीव्यग्रहस्ते मातर्मातर्नमस्ते दह दह जडतां देहि बुद्धिं प्रशस्ताम्। विद्ये वेदान्तगीते श्रुतिपरि-पठिते मोक्षदे मुक्तिमार्गे मार्गातीतस्वभावे (१)भव मम वरदा शारदे शुभ्रहारे ॥ ३ ॥ धीं धीं धीं धारणाख्ये(२) धृतिमतिनुतिभिर्नामभिः कीर्त्तनीये नित्ये नित्ये निमित्ते मुनिगणनमिते नूतने वै पुराणे। पुण्ये पुण्यप्रवाहे हरिहरनमिते नित्यशुद्धे सुवर्णे मात्रा(३)मात्रार्द्धतत्त्वे मतिमतिमतिदे माधव-प्रीतिनादे ॥४॥ ह्रीं क्ष्रीं ध्रीं ह्रीं (४)स्वरूपे हर हर(५) दुरितं पुस्तकव्यग्रहस्ते सन्तुष्टाकारचित्ते स्मितमुखि सुभगे जृम्भिनि(६)स्तम्भविद्ये। मोहे मुग्धप्रवाहे(७) कुरु मम विमति(८)ध्वान्तविध्वंसनीये गीर्गौर्वाग्(९)

(१) प्रभावे—पा० २ पुस्तके। (२) धीर्धीर्धीर्धारणाख्ये—पा० २ पु०

(३) मात्रे इति पाठान्तरम्। (४) ह्रीं क्षीं धीं ह्रीं—पा० २ पु०।

(५) दह दह—पा० २ पु०। (६) स्तम्भिनि—पा० २ पु०।

(७) प्रभावे—पा० २ पु०। (८) कुमति—पा० २ पु०।

(९) गीर्गौर्वाग्—पा० २ पु०।

भारती त्वं कविवृषरसनासिद्धिदा सिद्ध[illegible]
॥ ५ ॥ स्तौमि त्वां त्वां च वन्दे भज मम [illegible] ॥
मा कदाचित् त्यजेथाः मा मे बुद्धिर्वि[illegible] भवतु
न च मनो देवि मे यातु पापम्। मा मे [illegible] त्वं [illegible]
त्रिद्विपदि च समये ऽप्यस्तु मे नाकुल[illegible] शास्त्रे
वादे कवित्वे प्रसरतु मम धीर्मास्तु कुण्ठा क[illegible]
॥ ६ ॥ इत्येतैः श्लोकमुख्यैः प्रतिदिनमुपास[illegible]
यो भक्तिनम्रो वाणीं वाचस्पतेरप्यभिमतविभवो वाप[illegible]
पटुमृष्टपङ्कः। स स्यादिष्टार्थलाभी सुतमिव सततं
पाति तं सा च देवी सौभाग्यं तस्य लोके प्रवसति(१)
कविता विघ्नमस्तं प्रयाति ॥ ७ ॥ ब्रह्मचारी व्रती
मौनी त्रयोदश्यां निरामिषः। सारस्वतो नरः पाठा-
दस्य स्यादिष्ट(२)लाभवान् ॥ ८ ॥ पक्षद्वयेऽपि
यो भक्त्या त्रयोदश्येकविंशतिम्। अविच्छेदं पठे-
द्विद्वान्(३) ध्यात्वा देवीं सरस्वतीम् ॥ ९ ॥ शुक्ला-
म्बरधरां देवीं शुक्लाभरणभूषिताम्। वाञ्छितं फल-
माप्नोति स लोके नात्र संशयः ॥ १० ॥ इति ब्रह्मा
स्वयं प्राह सरस्वत्याः स्तवं शुभम्। प्रयत्नेन पठे-
न्नित्यं सो ऽमृतत्वं च गच्छति ॥ ११ ॥

इतिश्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये सरस्वतीस्तोत्रं समाप्तम्।

(१) गेहे प्रसरति -पा० २ पु०।

(२) पाठात् स स्यादिष्टार्थ—पु० २ पा०। (३) धीमान् -पा० २ पु०।